श्री

# व्यवहारमयूख

नामक:

श्रीमद्भट्टनीलकण्ठकृतव्यवहारशास्त्रनिबन्धः

टिप्पनीयुत

याज्ञवल्क्यस्मृत्युपेतश्च


रायसाहेब तथा कम्पॅनियन आफ धि स्टार आफ इण्डिया इत्युपपदधारिणा
रायल एशिऍटिक सोसायॅटीत्यभिधायां विद्वत्पर्षद सभासदा,
तस्या एव पर्षदो मुम्बापुरस्थशाखाया उपाध्यक्षेण

मुम्बापुरगतयुनिव्हर्सिटीनामकसर्वविद्योपचयविचारमुख्यस्थानस्थव्यवस्थापका-
नां सिण्डिकेटनामकमण्डलान्तर्गतेन

मुम्बापुर्यां

हायकोर्टाभिधन्यायाधिष्ठानगतवकीलसञ्ज्ञकवादिप्रतिवाद्य-
न्यतरपक्षसमर्थनाधिकारिणा

मण्डलिकोपाह्वेन

नारायणसूनुना विश्वनाथेन



मुम्बापुर्यां

एज्युकेशनल सोसायटीस प्रेस नामक मुद्रणयन्त्रालये मुद्रित


---



---


शालिवाहनशाके १८०१ इसवीसन १८७९

# उपोद्घातः

प्रणम्य परमात्मानं सच्चिदानन्दविग्रहम् ।
मन्वादीन्मुनिवर्यांश्च कुर्वे विविधसङ्ग्रहम् ॥ १ ॥
व्यवहारमयूखेऽथ याज्ञवल्क्यस्मृतौ तथा ।
भाषान्तरादिना चेमौ ग्रन्थौ जनसुखावहौ ॥ २ ॥

तत्र यद्यपि तावदस्मिन्भारतवर्षे आचारव्यवहारप्रायश्चित्तरूपेषु त्रिविधेष्वपि धर्म-वृक्षस्कन्धेषु वेद एव मूलं वेदोऽखिलो धर्ममूलमिति मन्वादिस्मरणात् (अ० २ श्लो० ६) अतो वेदादेव धर्म्यव्यवहारो निर्णेतव्यस्तथापि सम्प्रति बहूनां वेदशाखानामु-च्छिन्नतया तन्मूलकस्मृत्यादिभ्य एव सर्वधर्मज्ञानं भवितुमर्हतीति मिताक्षरादयो नि-बन्धा विरचिता विज्ञानेश्वरादिभिः । स्मृतिवचस्तु प्रामाण्यं वेदमूलकत्वादेव ।

यथाह मनुः । (अ० २ श्लो० ७।८)

य कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥
सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वा इति ॥

हेमाद्रौ नारदीयेऽपि ।

यत्र दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किलेति ।

अतएव तत्रैव यमः ।

एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।
तान्येवातिप्रमाणानि न हन्तव्यानि हेतुभिरिति ।

तत्राष्टादशस्मृतयस्तावत्यएवोपस्मृतयश्च आचारवीरमित्रोदयादौ दर्शिता । अतो व्यतिरिक्ता स्मृतयः सन्तीति हेमाद्रौ दानखण्डे षट्त्रिंशदतिरिक्ता स्मृतयः सन्तीति दर्शितमित्यादिभिर्भविष्यत्पुराणवचोभिर्दर्शितम् ।

एवमितिहासपुराणवचांस्यपि प्रमाणानि । तथा च तत्रैव नारदीये ।

वेदाः प्रतिष्ठिता देवि पुराणैर्नात्र संशयः ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥
इतिहासपुराणैश्च कृतोऽयं निश्चलः पुरा ॥
यत्र दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल ।
उभाभ्यां यत्र दृष्टं हि तत्पुराणेषु गीयत इति ॥

तथैव सदाचारोऽपि प्रमाणम् । यथाह मनुः (अ० २ श्लो० १२)

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणमिति ।

याज्ञवल्क्योऽपि (आ० श्लो० ७)

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतमिति ॥

एवं च स्मृत्यादिभ्य एव सर्वधर्मे निर्णेतव्ये स्मृत्यादीनां मिथोविरोधादिदर्शनात्साक्षात्तेभ्योऽपि तत्तद्विषयव्यवस्थया विरोधादिदोषपरिहारपूर्वकनिर्णयस्य कर्तुमशक्यतया तत्तत्त्वविद्भिर्निबन्धकारैर्निर्णीतो योऽर्थः स एव गत्यन्तराभावादनुसर्तव्यः। तत्र बहुष्वपि व्यवहारनिबन्धेषु सत्सु भट्टनीलकण्ठकृतव्यवहारमयूखस्यानतिविस्तृतत्वेऽपि सङ्गृहीतबहुप्रमाणकत्वादेतद्देशीयैर्विद्वद्भिर्व्यवहारनिर्णयायादृतत्वाच्च स एव भाषान्तरादिभिः परिष्कर्तुमारभ्यते। एवं याज्ञवल्क्यस्मृतौ धर्मसम्बन्धिबहुविषयसङ्ग्रहदर्शनात्सङ्क्षिप्तत्वाच्च साऽपि तथैव परिष्क्रियते।

तत्र भट्टनीलकण्ठस्थितिदेशकालबोधनाय श्रीकाशीक्षेत्रस्थविद्वच्छिरोमणिरानडोपनामकबालशास्त्रिलिखितानुसारेण तद्वंशो वर्ण्यते।

"पुरा किल दक्षिणदेशे पैठनाख्यग्रामे गोविन्दभट्टो नाम महाविद्वांस्तपस्वी ब्राह्मणपुङ्गव आसीत्। तत्पुत्रो रामेश्वरभट्टनामा श्रीकाशीक्षेत्रं वासार्थं जगाम। तत्र च श्रीरामयन्त्रेण सुचिरं भगवन्तं श्रीरामचन्द्रमुपासाञ्चक्रे। परिणतावस्थायां तस्य नारायणभट्टनामा पुत्रो बभूव। स बाल्यप्रभृति शान्त्यादिगुणसम्पन्नो महातपस्वी चाभवत्। तदानीमेव यवनैः श्रीविश्वेश्वरप्रासाद उत्सादितः। ततश्च कियता कालेन सर्वस्मिन्भारतवर्षेऽनावृष्टिरजायत। तदा सार्वभौमयवनैर्भट्टनारायणो वृष्ट्यर्थं प्रार्थितः। ततो नारायणभट्टेनाहोरात्राभ्यन्तरे वृष्टिर्भविष्यतीति प्रतिज्ञातं तथैव सर्वश्रुतिर्भ्यां देवो ववर्ष। तेन सर्वं जगन्ननन्द। सार्वभौमयवनेभ्यो नारायणभट्टेन श्रीविश्वेश्वरप्रासादनिर्माणानुमतिर्याचिता साऽपि तैर्दत्ता। तदा तेन महाप्रासादं निर्माय श्रीविश्वेश्वरः प्रतिष्ठापितः। ततस्तस्य लोकोत्तरं ब्रह्मवर्चसमालोच्यास्तिकजनाः सर्वे परमभक्तिप्रेमगद्गदा बभूवुः। तैश्च जगद्गुरुरिति महापदवी दत्ता तत्कुलीनानां चाग्रपूजानियमो विहित इतीयं कथा काशीक्षेत्रे सुप्रसिद्धा। नारायणभट्टस्य सर्वशास्त्रपारावारीणता त्रिस्थलीसेतुप्रयोगरत्नाद्यनेकग्रन्थनिर्मित्या जगत्प्रसिद्धा वर्तते। किंचाद्यपावत्तन्निर्मितग्रन्थैरेव श्रौतस्मार्तधर्मरक्षणं जातमित्यपि सुप्रसिद्धम्। वक्ष्यमाणवंशक्रमो नारायणभट्टपुत्ररामकृष्णभट्टकृतज्योतिष्टोमपद्धतिग्रन्थे स्पष्टं लिखितस्तस्येमौ श्लोकौ ॥

श्रीमद्दक्षिणदेशेऽस्य ह्यासीत्स भट्टगोविन्दः।
तत्सूनुः श्रीरामेश्वरभट्टोऽभूत्स सर्वदिक्ख्यातः ॥ १ ॥
तत्पुत्रः श्रीनारायणभट्टो जयति सूर्यवद्भूमौ।
तत्सूनूरामकृष्णभट्टो रामैकशरणतां यातः ॥ २ ॥

गोविन्दभट्टरामेश्वरभट्टाभ्यां निर्मिता ग्रन्थास्तज्जीवनसमयश्च साम्प्रतं यथार्थतया नोपलभ्यन्ते। नारायणभट्टस्थितिसमयस्तु साक्षात्तद्धस्तलिखितपुस्तकस्थेभ्यो ग्रन्थेभ्योऽवगम्यते। तत्रैकस्मिन्पुस्तके विक्रमार्क संवत् १६२४ इत्यङ्का लिखिताः। पुस्तकान्तरे च

ऋषिबाणाब्धिभूगण्ये शाके ज्येष्ठे सिते रवौ ।
चतुर्दश्या विशाखासु ग्रन्थोऽन्त समगादयम् ॥
भट्टरामेशपुत्रेण काशीपुर्यां यथामति ।
लिखित सप्तमोऽध्यायो भाष्ये शबरसत्कृताविति श्लोकाभ्यामिमे

( १४५७ ) ऽङ्कादर्शिता । तस्यैव पुस्तकस्य द्वादशाध्यायसमाप्तिपत्रे संवत् १६१२ इत्यङ्का लिखिता । नारायणभट्टस्य रामकृष्णभट्टशङ्करभट्टशर्माणौ महानिबन्धकारौ सकलशास्त्रपारीणौ द्वौ पुत्रावास्ताम् । तत्र रामकृष्णभट्टकृतग्रन्थेषु महाग्रन्थस्तन्त्र-वार्तिकव्याख्या । धर्मशास्त्रे तु जीवत्पितृकनिर्णयप्रभृतयो बहवो ग्रन्था सन्ति । शङ्करभट्टकृतग्रन्थेषु द्वैतनिर्णयाख्यो महान्ग्रन्थ सुप्रसिद्ध । मीमांसायामपि कानि चित्प्रकरणान्युपलभ्यन्ते । द्वैतनिर्णयारम्भश्लोकाभ्यामेतन्निर्णीयते । तौ श्लोकौ यथा ।

मीमांसासरसीसरोजमकरन्दास्वादनैकव्रतो
हस स्वीययशःसितावृतमतेरासीद्गुरूपाभिध ।
वाग्देव्यागतमत्सरा श्रियमय नित्यानुरक्तोऽभज
न्नोमुञ्चन्नविमुक्तक विजयते श्रीभट्टनारायण ॥

विबुधानन्दसन्दोहहेतवे तत्तनूद्भव ।
मीमांसाद्वैतसाम्राज्यनीतिज्ञो भट्टशङ्कर ॥

शङ्करभट्टस्य पुत्रौ द्वौ नीलकण्ठभट्टो दामोदरभट्टश्च । तत्राद्यो महानिबन्ध दानमयूखादीनां द्वादशानां मयूखानां कर्ता । द्वितीयश्च द्वैतनिर्णयपरिशिष्टकारइति द्वैतनिर्णयस्यदत्तामप्रदानिकप्रकरणादवगम्यते । नीलकण्ठपुत्रः शङ्करभट्टस्तत्कृता व्रतार्कप्रभृतयो ग्रन्था द्वादशार्कान्तनामान उत्तमनिबन्धा सन्ति ॥ रामकृष्णभट्टस्य दिनकरभट्ट कमलाकरभट्ट लक्ष्मणभट्टाख्यास्त्रय पुत्रा बभूवुस्तत्र दिनकरभट्टेन कृता उद्योतशान्तिसारादिग्रन्था प्रसिद्धा । दिनकरभट्टस्यैव कचिद्ग्रन्थे दिवाकरभट्ट इति नाम्ना व्यवहार । दिनकरभट्टस्य पुत्रो विश्वेश्वरभट्टस्तस्यैव गागाभट्ट इति नामान्तरम् । अनेन भाट्टचिन्तामणिप्रभृतयो बहवो ग्रन्था कृता । कमलाकरभट्टस्य निर्णयसिन्धु-प्रभृतयो ग्रन्था बहुतरमेव प्रसिद्धा मान्याश्च सन्ति । तस्य च स्थितिसमयो निर्णय सिन्धुग्रन्थस्यान्तिमश्लोकेन स्पष्टीभवति । स यथा ।

वसुऋतुऋतुभूमिते ( १६६८ ) गतेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे ।
तपसि शिवतिथौ समापितोऽय रघुपतिपादसरोरुहेर्पितश्चेति ॥

कमलाकरस्य पुत्रोऽनन्तभट्टस्तेन श्रीरामकल्पद्रुमप्रभृतय पद्धतिग्रन्था बहव कृता । लक्ष्मणभट्टनिर्मिता अप्याचाररत्नप्रभृतयो ग्रन्था प्रसिद्धा सन्ति । एवमप्यस्मिन्कुले महामहाविद्वांसस्तपस्विन सत्पुरुषा उत्पन्नास्तेषामपि कीर्तिर्दिगन्तेषु विख्यातास्ति । तेषां प्रदर्शनायाय वंशवृक्षो लिखितस्तत्र ये साम्प्रत वर्तन्ते तेषां नामसु प्रथम श्रीशब्द प्रयुक्त ॥ ”

- गोविन्दभट्ट
  - रामेश्वरभट्ट
    - नारायणभट्ट
      - रामकृष्ण
        - दिनकर
          - विश्वेश्वर* (* गागाभट्ट)
        - कमलाकर
          - अनन्त
          - प्रभाकर
            - जगन्नाथ
              - बापूदेव
                - लालभट्ट
                  - प्रभाकर
                    - रामकृष्ण
                  - वैद्यनाथ
                  - जगन्नाथ
                    - नारायण
                      - श्रीपुरुषोत्तम
                      - श्रीगोपाल
                      - श्रीछोटाभट्ट
                    - श्रीलक्ष्मण
          - श्यामभट्ट
            - गोविन्द
              - रघुनाथ
              - दिवाकर
                - रामेश्वर
                  - विश्वनाथ
                - हरभट्ट
                  - विश्वेश्वर
                    - जयराम
                      - श्रीनारायण
                        - श्रीवीरेश्वर
                      - श्रीगोविन्द
                      - श्रीगोपाळ
                - बाळभट्ट
                  - श्रीसखाराम
                  - आत्माराम
                    - श्रीअनन्त
                    - श्रीसीताराम
                  - वेणीराम
                  - श्रीगङ्गाराम
                - राजाराम
                  - दिनकर
                    - कमलाकर
                      - श्रीकान्तानाथ
                      - श्रीकृष्ण
                      - श्रीराम
              - अनन्तराम
                - नारायण
                  - राम
                    - हरभट्ट
                  - गोपाळ
                  - गोविन्द
                    - श्रीबाबाभट्ट
                      - श्रीवैजनाथ
                  - लक्ष्मण
                    - श्रीरामेश्वर
        - लक्ष्मण
      - शङ्कर
        - नीलकण्ठ
          - शङ्कर
            - रामभट्ट
              - दामोदर
                - रामकृष्ण
                  - सखाराम
                    - श्रीरामेश्वर
        - दामोदर

[illegible] सविशकानुसारेणैकोनविंशशतकान्तर्गते षड्विंशे वर्षे मुम्बापुर्यधिपस्याभ्यनुज्ञया व्यवहारमयूखस्य पुस्तकमत्र मुम्बापुर्यामेव मुद्रितमासीत्। अस्यच ग्रन्थस्यार्थप्रकाशनायाङ्ग्भाषया विपरिणमन बारोडेलाख्येनाङ्ग्विदुषा तदनन्तरं वर्षे मुद्रयित्वा प्रसिद्धिं प्रापितम्। तस्यैव पुनर्व्यक्ततरतयार्थप्रकाशनाय प्रसिद्धक्षेत्रादिषु निवसता विदुषा सकाशात् पुस्तकानि समाहृत्य यथामति प्रामाणिकपाठान्निश्चित्याय ग्रन्थो मुद्रित । तेषु च।

क.—मिरज इत्याख्यनगरादाठल्ये इत्युपनामकैर्भिकदेववासुदेवाभिधैरेक प्रापितम्।

ख.—साताराख्यग्रामात् गजेन्द्रगडकर इति प्रसिद्धानामाचार्याणा सकाशात् श्रीमत्खाबेटे इत्युपनामकगोविन्दविनायकशर्मभिरुपलभ्य प्रेषितम्।

ग.—पुण्यग्रामात् आपटे इत्युपनामकरामदीक्षितशर्मणा सकाशात् कानिटकर इत्युपाख्यनारायणरावशर्मभिर्गृहीत्वा प्रहितम्।

घ.—रत्नागिरिग्रामात् आठल्ये इत्युपनामकवासुदेवहरिशर्मभि प्रेषितम्।

ङ.—मुम्बापुर्यामष्टादशशतकान्तर्गते पञ्चाशीतितमे शाकाब्दे शिलायन्त्रे मुद्रितम्।

च.—मुम्बापुर्यधिपत्याज्ञयेसवीशकस्यैकोनविंशशतकान्तर्गते षड्विंशे वर्षे मुद्रायन्त्रे प्राचीनपुस्तकाकारेण मुद्रितम्।

छ.—डाक्टरोपपदकभाऊदाजीतिनाम्ना सकाशान्मया क्रीत्वासङ्गृहीतम्।

ज.—श्रीकाशीस्थपुस्तकस्य प्रतिछन्दक लेखकेन कारयित्वाऽऽनीतम्।

पूर्वोक्तपुस्तकेषु क ग घ चिह्नितपुस्तकाना मूलपुस्तकमेकमेव स्यादिति सम्भाव्यते। ख चिह्नितपुस्तक मूलान्तर दृष्ट्वा लिखितम्। एतत्पुस्तक प्रायः पञ्चसप्ततिसङ्ख्यवर्षेभ्योपि पुरातनमिति भासते। अन्यदपि पुस्तकमापटे इत्युपनामकरामदीक्षितशर्मभि स्वकीय प्रेषित शतसङ्ख्यवर्षेभ्योऽपि पुराणमासीत्। परन्तु तच्छुद्ध नाभवदित्युपयोग न प्रापितम्। सुरतनामकग्रामादप्येक लब्धम्। तदपि प्राय शुद्ध नासीदिति न सङ्गृहीतम्। अत्र सङ्क्षेपार्थमग्रे सङ्केतितानि चिह्नानि वर्तन्ते तानीमानि

(१) अ०=अध्याय.
(२) अ० को०=अमरकोश.
(३) आ०=आचाराध्याय.
(४) क०=कण्डिका.
(५) क० वि०=कमलाकरकृतविवादताण्डव.
(६) का०=काण्डम्.
(७) जी० दा०=जीमूतवाहनकृतदायभाग.
(८) प०=पत्रम्.
(९) परि०=परिच्छेद.

(१०) पा०=पाद.
(११) पू०=पूर्वार्धम्.
(१२) पृ०=पृष्ठम्.
(१३) प्रा०=प्रायश्चित्ताध्याय.
(१४) म०=मनु
(१५) मि०=मिताक्षरा.
(१६) या०=याज्ञवल्क्य
(१७) व०=वर्ग.
(१८) वी०=वीरमित्रोदय.
(१९) व्य०=व्यवहाराध्याय.
(२०) व्य०मा०=व्यवहारमाधव
(२१) श्लो०=श्लोक.
(२२) सू०=सूत्रम्.

एतस्य व्यवहारमयूखपुस्तकस्योपरिष्टात्सर्वयाज्ञवल्क्यस्मृतिपुस्तक [illegible] तच्चाभिमलिखितपुस्तकानि विचार्य सिद्धवत् कृतम्.

१. शकस्याष्टादशशतकान्तर्गते पञ्चाशीतितमे वर्षे श्रीधरलालजीनाम्ना गौडब्राह्मणेन ज्ञानसङ्ग्रहनामकशिलायन्त्रे मिताक्षराख्यटीकासहित मुद्रितम्.

२. तस्मिन्नेव रुधिरोद्गारिनामसंवत्सरे बापूशेटनामभि स्वकीयशिलायन्त्रे मिताक्षरासहित मुद्रितम्.

३. इसवीशकस्यैकोनविंशशतकान्तर्गते त्रयोदशे वर्षे कलिकाताख्यराजधान्या मिताक्षरासहित मुद्रितम्.

४. बोडसोपनामकविद्वन्मणिराजारामशास्त्रिणा स्वकीय तत्पितामहलिखितम्.

५. डाक्टरस्टेन्झलरनामभिरिसवीशकस्य एकोनविंशशतकान्तर्गते एकोनपञ्चाशत्तमे वर्षे ब्रेसलानामकनगरे मुद्रितम्.

अत्र येषा ग्रन्थाना पत्रादीनामङ्का लिखितास्ते कदा क्व केनच मुद्रितास्तद्बोधनाय सङ्क्षेपतस्तन्मुद्रणस्थानादीनि लिख्यन्ते.—

१ अमरकोश—मुम्बाया मुम्बापुरीवर्तिराजकीयग्रन्थशालाधिकारिणा मुद्रायन्त्रे मुद्रित ; खिस्तान्दा १८७७.

२ आश्वलायनश्रौतसूत्रम्.—कलिकाताया बाप्टिस्टमिशनमुद्रायन्त्रे मुद्रित; खिस्ताब्दा १८७४.

३ आश्वलायनगृह्यसूत्रम्.—तत्रैव, खिस्ताब्दा १८६९.

४ जीमूतवाहनकृतदायभाग —कलिकाताया इञ्पुकेशनमुद्रायन्त्रे ; खि-

५ जैमिनिकृतपूर्वमीमांसा.—कलिकातायां गणेशमुद्रायन्त्रालये; खिस्ताब्दाः १८७३.

६ तर्कसङ्ग्रहदीपिका—मुम्बायां निर्णयसागरमुद्रायन्त्रालये, खिस्ताब्दा १८७६.

७ दत्तकचन्द्रिका.—कलिकातायां इज्युकेशनमुद्रायन्त्रालये; खिस्ताब्दा १८३४.

८ दत्तकमीमांसा.—तत्रैव तदैवच.

९ धर्माब्धिसार —मुम्बायां बापुसदाशिव शेट नाम्न शिलायन्त्रे; शाके १७८३.

१० निर्णयसिन्धु—तत्रैव, शाके १७८४.

११ पाणिनि —बोणनगरे मुद्रायन्त्रे बोधलिङ्गेन मुद्रित, खिस्ताब्दा १८३९.

१२ मनुस्मृति—मुम्बायां बापुसदाशिवशेटनाम्न शिलायन्त्रे, शाके १७८०.

१३ मिताक्षरा.—मुम्बायां प्रज्ञायुक्तज्ञानसागरनामकशिलायन्त्रे, शाके १७८५.

१४ वीरमित्रोदय—खिदिरपुरे मदनपालस्य मुद्रायन्त्रे, खिस्ताब्दा १८१५.

१५ संस्कारकौस्तुभ—मुम्बायां बापुसदाशिवशेटनाम्न शिलायन्त्रे; शाके १७८३.

इत्थं यथामति मयात्र विचार्य किंचिद्यद्यत्कृतं जनसुखाय बुधाः समीक्ष्य।
तच्छोध्यतामिदमहं विनयेन याचे तेन प्रसीदतु जनानविता परात्मा ॥
मुम्बायां शाके १८०१

मण्डलिकोपाह्वविश्वनाथशर्मा.

## ॥ व्यवहारमयूखस्थप्रकरणानां सूचीपत्रम् ॥




| प्रकरणम् । | पृष्ठाङ्कः । | पङ्क्तिः । | प्रकरणम् । | पृष्ठाङ्कः । | पङ्क्तिः । |
|---|---|---|---|---|---|
| मंगलाचरणम् | १ | २ | **भुक्तिः ।** | | |
| व्यवहारलक्षणम् | १ | ७ | कीदृशी भुक्तिः प्रमाणम् | ११ | २९ |
| व्यवहारभेदः | १ | १३ | अनागमभोगे | १२ | २५ |
| **व्यवहारमातृका ।** | | | **साक्षिणः ।** | | |
| सभ्यसभा | २ | ३ | तद्भेदाः | १३ | ३ |
| धर्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तौ | ३ | १४ | तत्संख्या | १३ | १० |
| धर्मशास्त्रयोर्विरोधे | ३ | १६ | एकसाक्षिविषय | १३ | १५ |
| देशादिधर्मविषय | ३ | २० | साक्षित्वेन वर्ज्याः | १३ | २० |
| आसेधनविधि | ४ | ४ | तत्रापि क्वचिद्ग्राह्याः | १४ | ५ |
| अनासेध्याः | ४ | १० | साक्षिणां कर्तव्यता | १४ | १४ |
| आह्वानानाह्वान | ४ | १५ | कूटसाक्षिकरणे | १५ | १ |
| आहूतोऽनागच्छन् दण्ड्यः | ४ | २२ | साक्षिप्रश्नप्रकार | १५ | ९ |
| प्रतिनिधि | ५ | २ | साक्ष्यानभिधाने | १६ | ३ |
| तदपवाद | ५ | ६ | **दिव्यम् ।** | | |
| भाषा | ५ | १२ | | | |
| पक्षाभास | ५ | २५ | तद्भेदा । तत्करणविषय | १६ | २० |
| उत्तरम् | ६ | ८ | तदधिकारिव्यवस्था | १७ | १६ |
| मिथ्योत्तरम् | ६ | ११ | काल | १८ | ११ |
| सत्योत्तरम् | ६ | १५ | देश | १८ | १९ |
| कारणोत्तरम् | ६ | १६ | सर्वदिव्यसाधारण विधि | १८ | २५ |
| प्राङ्न्यायोत्तरम् | ६ | १८ | धटविधि | १९ | २९ |
| क्रियानिर्णय | ६ | २५ | तत्प्रयोग | २१ | १४ |
| प्रत्यभियोग | ७ | २४ | अग्निविधि | २१ | २८ |
| प्रतिभू | ८ | २ | तत्प्रयोग | २५ | ३ |
| प्रतिभूवचनव्यवस्था | ८ | ४ | जलविधि | २६ | २ |
| प्रतिभुवोऽभाव | ८ | १२ | तत्प्रयोग | २६ | ३० |
| | | | विषविधि | २७ | १७ |
| **प्रमाणनिरूपणम् ।** | | | कोशविधि | २८ | १ |
| प्रमाणचातुर्विध्यम् | ८ | २३ | तण्डुलविधि | २८ | १४ |
| | | | तप्तमाषविधि | २८ | २२ |
| **लेख्यम् ।** | | | फालविधि | २९ | ६ |
| तद्भेदा | ९ | २३ | धर्मजविधि | २९ | १० |
| लेख्यरीति | १० | १५ | तत्प्रयोग | २९ | २४ |
| राजलेख्यम् | १० | २० | व्यवस्था | ३० | ५ |
| व्यवहाराक्षपत्रविषये | ११ | १४ | दायविभाग | ३० | २४ |
| दुष्टलेख्यानि | ११ | २३ | दाय | ३३ | १ |

| प्रकरणम् । | पृष्ठाङ्क । | पङ्क्ति । |
|---|---|---|
| तद्विभाग | ३३ | ११ |
| विभागकाल | २३ | १७ |
| विषमविभाग | २४ | २० |
| यमन्यामध्ये ज्येष्ठ्यम् | ३४ | २४ |
| पैतामहे धने पितापुत्रयोः समांशित्वम् | २५ | ७ |
| मात्रंश | २६ | १ |
| सापत्नमातृपैतामह्योरंशौ | २६ | ५ |
| दायग्रहणे पुत्रादीनामवधि | २६ | १५ |
| मातृतो विभाग | ३६ | २५ |
| विजातीयविभाग | ३७ | १ |
| विभागानन्तरोत्पन्नपुत्रे | ३७ | १९ |
| असंस्कृतभ्रातृभगिनीविषये | ३८ | ८ |
| दास्यादिपुत्रा | ३८ | १७ |
| दत्तकप्रकरणम् । | | |
| दत्तक | ३९ | ७ |
| तत्प्रतिग्रहप्रकार | ४० | ४ |
| तद्वैविध्यम् | ४२ | १ |
| दानप्रतिग्रहविधि | ४५ | १४ |
| अविभाज्यम् । | | |
| तद्देश | ४६ | २६ |
| क्रमागतायां भुवि | ४७ | ४ |
| विद्याधनम् | ४७ | ११ |
| पुनर्विभाग | ४९ | २१ |
| विभागसन्देहे | ५० | ५ |
| विभक्तकृत्यम् | ५१ | १८ |
| सप्रतिबन्धदायहरणक्रम | ५२ | १ |
| पत्नी | ५२ | ६ |
| दुहिता | ५३ | १२ |
| दौहित्र | ५३ | १९ |
| पिता | ५३ | २१ |
| माता | ५३ | २१ |
| भ्राता | ५४ | १ |
| तत्पुत्र | ५४ | १ |
| गोत्रजा | ५४ | ९ |
| पितामही | ५४ | ९ |
| भगिनी | ५४ | १० |
| तदितरे सपिण्डा | ५४ | १८ |
| समानोदका | ५४ | २२ |

| प्रकरणम् । | पृष्ठाङ्क । | पङ्क्ति । |
|---|---|---|
| बान्धव | ५४ | २५ |
| आचार्ये शिष्य | ५५ | ७ |
| ब्राह्मण | ५५ | ११ |
| अन्यार्थिके | ५५ | १२ |
| यत्यादिधने | ५५ | १६ |
| संसृष्टिनिर्णय । | | |
| संसर्ग | ५५ | २६ |
| संसृष्टिधनाधिकारिण | ५६ | १७ |
| स्त्रीधनम् । | | |
| तद्देश | ५९ | २ |
| पारिभाषिकस्त्रीधनस्य रूपम् | ६० | ३ |
| स्त्रीधने भर्त्रादीनामस्वातन्त्र्यम् | ६० | १७ |
| तदपवाद | ६० | २५ |
| प्रतिदान विकल्प | ६० | २७ |
| स्त्रीधनाधिकारिण | ६१ | ११ |
| दुहिता | ६१ | १५ |
| दौहित्री | ६२ | ७ |
| दौहित्र | ६२ | ७ |
| पुत्रादि | ६२ | १४ |
| भर्ता तत्प्रयासज्ञाश्च | | |
| सामान्य | ६२ | १५ |
| अन्यथा | ६[illegible] | २२ |
| तेषां भरणम् | ६४ | १८ |
| न पुत्रा निर्दोषाश्चेद्दशभाज | ६४ | २८ |
| अनपत्यकन्याभरणम् | ६५ | ३ |
| ऋणादानम् । | | |
| वृद्धि | ६५ | १६ |
| आधि । | | |
| तद्भेदा | ६६ | २२ |
| आधिभोगे | ६७ | १ |
| आधिनाशे मूल्यदानम् | ६७ | ६ |
| तदपवाद | ६७ | ११ |
| आधिसिद्धिमोक्षौ | ६७ | २० |
| प्रतिभू । | | |
| प्रतिभूत्पुत्रादिभिर्ऋणदान | ६८ | १७ |

| प्रकरणम् । | पृष्ठाङ्क । | पङ्क्ति । |
|---|---|---|
| बहुषु प्रतिभूष्वेकेन दानम् | ६८ | २३ |
| प्रतिभुव ऋणिकेन मार्गे दानम् | ६९ | २ |
| उत्तमर्णस्य ऋणग्रहणप्रकार | ६९ | ४ |
| ऋणादाने उत्तमर्णानां क्रम | ७० | १७ |
| पुत्रपौत्राभ्यामृणदाने | ७१ | ४ |
| ताभ्यामदेयमृणम् | ७१ | १५ |
| ऋणदानाधिकारिण | ७१ | २० |
| क्वचिददेयमपि देयम् | ७२ | ११ |
| निक्षेप । | | |
| तद्वैविध्यम् | ७३ | ४ |
| तद्योग | ७३ | १२ |
| याचितादाने तन्नीतिश्च | ७३ | १२ |
| अस्वामिविक्रय | ७४ | १८ |
| तत्र दाशो भाग | ७५ | २२ |
| परस्वामिकनष्टलब्धपशूनां भृति | ७६ | ५ |
| निधिप्राप्ति | ७६ | ८ |
| सम्भूयसमुत्थानम् । | | |
| बहूनामैकेन व्यवहारे कृते | ७६ | २० |
| कर्त्रादिष्वंशविभाग | ७७ | १ |
| दत्ताप्रदानिकम् । | | |
| अदेयम् | ७७ | १३ |
| देयम् | ७७ | २१ |
| दत्तम् | ७७ | २६ |
| अदत्तम् | ७८ | २८ |
| उत्कोच | ७८ | १५ |
| अभ्युपेत्याशुश्रूषा । | | |
| भृत्य | ७८ | २५ |
| दास | ७९ | १ |
| तत्कर्म | ७९ | ९ |
| तद्भेदा | ७९ | १९ |
| तन्मोक्ष | ७९ | २५ |
| तस्य विधि | ८० | १० |

| प्रकरणम् । | पृष्ठाङ्क । | पङ्क्ति । |
|---|---|---|
| वेतनादानम् । | | |
| अनिश्चितभृतिकरणे | ८० | २० |
| प्रतिश्रुत्य कर्माकरणे | ८० | २५ |
| स्वामिसेवकयोर्विवादे | ८१ | ५ |
| भाटकम् | ८१ | १६ |
| संविद्व्यतिक्रम | ८१ | २४ |
| संविद्भेदे दण्ड | ८२ | ११ |
| क्रीतानुशय । | | |
| पण्यपरीक्षावधि | ८२ | १६ |
| विक्रीयासम्प्रदानम् | ८३ | १ |
| पुनर्विक्रय | ८३ | ८ |
| स्वामिपालविवाद | ८३ | १५ |
| गवादिप्रचारार्थं भूभाग | ८३ | २० |
| सीमाविवाद । | | |
| तत्र साक्षिण | ८४ | १५ |
| [illegible] प्रामाण्यम् | ८५ | १ |
| मर्यादाप्रभवे | ८५ | २० |
| वाक्पारुष्यम् । | | |
| तद्भेद | ८६ | ५ |
| दण्डपारुष्यम् । | | |
| अपराधभेदेन दण्डभेदा | ८७ | ८ |
| स्तेयम् । | | |
| तद्भेदा | ८८ | ११ |
| प्रकाशतस्करा | ८८ | १५ |
| तेषां दण्डा | ८८ | २० |
| साहसम् । | ९० | ७ |
| घातका | ९० | १५ |
| तत्कार्यकारिण | ९० | १८ |
| साहसप्रयोजकस्य दण्ड | ९२ | ९ |
| स्त्रीसङ्ग्रहणम् | ९२ | १६ |
| तत्र दण्डतारतम्यम् | ९३ | ३ |
| स्त्रीपुंधर्मे | ९५ | ४ |
| द्यूतसमाह्वयौ | ९५ | ११ |
| प्रकीर्णकम् । | | |
| प्रकीर्णकम् | ९६ | १ |


इति व्यवहारमयूखस्थप्रकरणाना सूचीपत्रं समाप्तम्.

## ॥ याज्ञवल्क्यधर्मशास्त्रस्थप्रकरणानां सूचीपत्रम् ॥


| प्रकरणम् । | पृष्ठाङ्कः । | पङ्क्तिः । |
|---|---|---|
| **अथ आचाराध्यायः प्रथमः** | | |
| उपोद्घातः | ९९ | ३ |
| संस्काराः | ९९ | २२ |
| उपनयनम् | १०० | ७ |
| ब्रह्मचारिधर्माः | १०० | १२ |
| समावर्तनम् | १०३ | १ |
| विवाहः | १०३ | [illegible] |
| वर्णजातिविवेकः | १०६ | १ |
| गृहस्थधर्माः | १०६ | १६ |
| स्नातकधर्माः | १०९ | १ |
| भक्ष्याभक्ष्ये | १११ | २६ |
| द्रव्यशुद्धिः | ११३ | १ |
| दानविधिः | ११४ | ७ |
| श्राद्धविधिः | ११५ | १९ |
| गणपतिकल्पः | ११९ | २४ |
| ग्रहशान्तिः | १२१ | १८ |
| राजधर्माः | १२२ | २० |
| **इत्याचाराख्य प्रथमोऽध्याय ॥** | | |
| **अथ व्यवहाराध्यायो द्वितीय** | | |
| व्यवहारपरिभाषा | १२८ | २ |
| साधारणमातृका | १२८ | १९ |
| ऋणादानम् | १३० | २५ |
| निक्षेपः | १३३ | १ |
| साक्षिणः | १३३ | ८ |
| लेख्यम् | १३४ | १५ |
| दिव्यम् | १३५ | ११ |
| दायविभागः | १३६ | २३ |
| सीमाविवादः | १३९ | १३ |
| स्वामिपालविवादः | १४० | ५ |
| अस्वामिविक्रयः | १४० | २४ |
| दत्ताप्रदानिकम् | १४१ | १३ |
| क्रीतानुशयः | १४१ | १८ |
| अभ्युपेत्याशुश्रूषा | १४२ | ३ |
| संविद्व्यतिक्रमः | १४२ | १० |
| वेतनादानम् | १४३ | १ |
| द्यूतसमाह्वयौ | १४३ | १४ |
| वाक्पारुष्यम् | १४३ | २५ |
| दण्डपारुष्यम् | १४४ | १५ |
| साहसम् | १४५ | २५ |
| सम्भूयसमुत्थानम् | १४८ | १ |
| स्तेयम् | १४८ | १६ |
| स्त्रीसंग्रहणम् | १४९ | २५ |
| प्रकीर्णकम् | १५० | २३ |
| **इति व्यवहाराख्यो द्वितीयोऽध्यायः ॥** | | |
| **अथ प्रायश्चित्ताध्यायस्तृतीयः ॥** | | |
| आशौचम् | १५२ | २ |
| आपद्धर्माः | १५४ | १९ |
| वानप्रस्थधर्माः | १५५ | १३ |
| यतिधर्माः | १५६ | ९ |
| ब्रह्महत्याप्रायश्चित्तम् | १६७ | ५ |
| सुरापानप्रायश्चित्तम् | १७० | १७ |
| सुवर्णस्तेयप्रायश्चित्तम् | १७१ | १ |
| गुरुतल्पगप्रायश्चित्तम् | १७१ | ६ |
| संसर्गिप्रायश्चित्तम् | १७१ | ११ |
| उपपातकप्रायश्चित्तम् | १७१ | १६ |
| प्रकीर्णकप्रायश्चित्तम् | १७३ | २१ |
| पतितस्त्यागविधिः | १७४ | ३ |
| रहस्यप्रायश्चित्तम | १७४ | १७ |
| कृच्छ्रादिलक्षणम् | १७५ | १५ |
| **इति प्रायश्चित्ताध्यायस्तृतीयोऽध्यायः ॥** | | |


समाप्तं चेदं सूचीपत्रम्.

# ॥ व्यवहारमयूखस्य शुद्धिपत्रम् ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धपाङ्क्तिः | शुद्धपङ्क्तिः |
|---|---|---|---|
| १ | २० | ॥ | (निष्कासनीयमिदम्) |
| २ | २२ | कर्त्तव्या | कर्तव्या |
| ,, | २३ | तत्र सभायाम् | (द्वविंशपङ्क्त्यन्ते स्थाप्यमिदम्) |
| ,, | ३४ | (९) वी० प० १ पृ० २ | (९) वी० प० १० पृ० २ |
| ४ | १५ | व्याख्यात्तौ— तथैव च | (चतुर्दशपङ्क्त्यन्ते स्थाप्यमिदम्) |
| ,, | ,, | अकल्प | अँकल्प |
| ,, | ३१ | वीरमित्रोदये | वीरमित्रोदये प० १७ पृ० १ |
| ५ | ९ | प्रतिनिषेधार्थं | प्रतिनाथिनिषेधार्थम् |
| ९ | २५ | विद्याद्वि० | विद्याद्व० |
| १० | ५ | न्मि | न्म |
| ,, | २१ | ८४) | ८४।८५) |
| ,, | २४ | ८६) | ८६।८७।८८) |
| ,, | ३० | ३१८ | ३१७।३१८ |
| १२ | १९ | कालेभो० | कालोभो० |
| १७ | २५ | चि यन्ध० | श्चिरयन्ध० |
| १९ | १२ | °पोरेव | °थोरेव |
| ३० | ९ | (भ० | (व्य० |
| ३१ | १३ | स्वातन्त्र्यपरम् | ऽस्वातन्त्र्यपरम् |
| ३४ | १९ | कपर्दिक | कपर्दिका |
| ४५ | १४ | सवषाम् | सर्वेषाम् |
| ५५ | २८ | सस्पृष्ट० | संसृष्ट० |
| ५८ | ६ | गृह्णापु | गृह्णीयु |
| ७२ | ९ | ऋणभाग्या | ऋणभाग्यौ |
| ७३ | १२ | आजीव | आजीवन् |
| ८९ | ७ | मनु | मनु (अ०९ श्लो० २७६) |
| ,, | १६।१७ | वध्वान्तमिनि वर्तयेन् | बद्धाम्भसि निमज्जयेत् |
| ,, | ३१।३२ | मनुस्मृतिपुस्तकेष्वीद वचन न दृश्यते | (आपानन पतितमिदमिति निष्कासनीयम्) |
| ९२ | ५ | हिंसयन् चोर० | हिंसयंश्चोर० |
| ९३ | २० | च गुप्तांचेद्बधोधिक इति | (इदमधिकत्वादनर्थकत्वाच्च निष्कासनीयम्) |

## ॥ याज्ञवल्क्यस्मृतेःशुद्धिपत्रम् ॥

| पृष्ठम् | श्लोक | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| | | आचाराध्याय | |
| १०३ | ५६ | न तन्मम | नैतन्मम |
| १०८ | १२८ | कुशून | कुसूल |
| ११० | १४८ | वाण | बाण |
| ११३ | १८६ | शुध्य यविक | शुध्य यावक |
| ११५ | २१९ | त्रिसुपर्णक | त्रिसुपर्णक |
| ११६ | १ | नोऽगद | नोगद |
| १२० | २७२ | कपाय | काषाय |
| १२४ | ३३२ | करविक् | करविक् |
| | | व्यवहाराध्याय | |
| १३८ | १८० | क्षीन | क्षीव |
| १५० | २९३ | पुरुष | पुरीष |
| | | प्रायश्चित्ताध्याय | |
| १५३ | १४ | शुद्धि | शुद्धि |
| १५५ | ४७ | पण्ण | पर्णा |
| १५८ | ८५ | नासो | नैपो |
| १५९ | ९४ | श्राम | सोमा |
| ,, | ९९ | वर्ण | कर्ण |
| १६१ | १३१ | भव योनि | भवन्योनि |
| १६२ | १४३ | सर्वासां | सर्वेषां |
| १६३ | १६१ | ईश्वरे | ईश्वर |
| १६५ | १८८ | आहूत | आभूत |
| १६७ | २०७ | पुक्स | पुल्कस |
| ,, | २१२ | निर्जने घोर | निर्जले देशे |
| १६८ | २२९ | उत्कर्ष | उत्कर्षे |
| १७१ | २५७ | मुशल | मुसल |
| १७६ | ३२१ | कृच्छ्रातिकृच्छ | कृच्छ्रातिकृच्छ्र |

श्री

॥ गणेशाय नमः ॥

# व्यवहारमयूखः

---

उक्त्वा नृपनयरीतिं नत्वा भास्वत्पदाम्बुजं सम्यक् । विरचयति नीलकण्ठो व्यवहारविनिर्णये किंचित् ॥ १ ॥ द्विजराजैकमूर्धन्यं वृषाध्यक्षं शिवान्वितम् । काश्यां सर्वोपदेष्टारं भावये शङ्करं गुरुम् ॥ २ ॥ विरोधिमार्गद्वयदर्शनार्थं द्वेधा बभूवात्र परः पुमान्यः । श्रीशङ्करो भट्ट इहैकरूपो मीमांसकद्वितमुरीचकार ॥ ३ ॥ प्रतारकैरादृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितम् । ऊनोक्तितो नात्र हि तेन काचित्खपुष्पहीनाऽपचितिर्न हीयते ॥ ४ ॥

मङ्गलाचरणम् ।

विप्रतिपद्यमाननरान्तरगताज्ञाताधर्मज्ञापनानुकूलो व्यापारो व्यवहारः । वादिप्रतिवादिकर्तृकः संभवद्दोषसाक्षिप्रमाणको विरोधिकोटिव्यवस्थापनानुकूलो वा व्यापार ■ । सम्प्रतिपत्त्युत्तरे तु व्यवहारपदप्रयोगो भाक्त इति मदनरत्ने । वादवितण्डादिव्यावृत्त्यर्थमुत्तरदलम् ॥ १८ ।

व्यवहारलक्षणम् ।

अथ तत्पदम् । याज्ञवल्क्यः (व्य० श्लो० ५) । स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् । आधर्षितस्तिरस्कृतः ॥

तस्याष्टादश भेदानाह मनुः (अ० ८ श्लो० ४।५।६।७) । तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः । सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥ वेतनस्यैव चादानं संविदश्च व्यतिक्रमः । क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके । स्तेयं च साहसं चैव स्त्रीसङ्ग्रहणमेव च ॥ स्त्रीपुन्धर्मो विभागश्च द्यूतमाह्वय एव च । पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ अनपकर्मापदानम् । अनुशयः पश्चात्तापः । द्यूतमप्राणिकरणिका क्रीडा । प्राणिकरणिका समाह्वयः ॥ अत्र मनुष्यमारणं स्तेयं परदाराभिमर्शनम् । पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधमिति बृहस्पत्युक्तेः ॥ स्त्रीसङ्ग्रहणवाक्पारुष्यदण्डपारुष्याणां साहसभेदत्वेऽपि पृथङ्निर्देशो गोबलीवर्दन्यायेन ॥ एतेषामष्टादशपदानां स्वरूपमग्रे व्यक्तीकरिष्यते ॥

व्यवहारभेदाः ।

---

(१) ऊनोक्तितातोन (क)

(२) वी० प० १ पृ० २

(३) मि० व्य० प० २ पृ० २, वी० प० ८९, पृ० २.

(४) वी० प० १९२ पृ० २

(५) अत्र स्तेयस्याप्युपलक्षणं बोध्यम् पूर्वोक्तमनुवचनेषु स्तेयस्यापि साहसात्पृथक्त्वेन दर्शनात्

## ॥ अथ व्यवहारमातृकाः ॥

अथ व्यवहारमातृका । न्यायसभा ।

बृहस्पतिः । दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक् । प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥ सैव च धर्माधिकरणम् । धर्मशास्त्रविचारेण सारासारविवेचनम् । यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति कात्यायनोक्तेः ॥ मनुः (अ० ८ श्लो० १।२) ॥
5 व्यवहारान्दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः । मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥ विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् ॥ याज्ञवल्क्यः (व्य० श्लो० १) । व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह । धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ नृपः प्रजापालनाधिकृतो यः कश्चिन्न क्षत्रिय एव । कात्यायनः । सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥ अत्र ब्राह्मणोऽनियुक्तः ।
10 सभ्यास्तु नियुक्ताः । तथा चोक्तम् । नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हतीति ॥

प्राड्विवाकस्वरूपमाह बृहस्पतिः । विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च । प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृत इति ॥

अमात्यस्वरूपमाह व्यासः । सर्वशास्त्रार्थवेत्तारमलुब्धं न्यायभाषिणम् । विप्रं प्राज्ञं क्रमायातममात्यं स्थापयेद्द्विजमिति । अत्र पुनर्द्विजग्रहणं विप्राभावे क्षत्रियवैश्य-
15 योरुपादानार्थम् । तथाच कात्यायनः । यत्र विद्वान्न विप्रः स्यात्क्षत्रियं तत्र योजयेत् । वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेदिति ॥

सभ्यांश्चाह याज्ञवल्क्यः (व्य० श्लो० २) । श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदः कार्या रिपौ मित्रे च ये समा इति ॥ एतेषां संख्यामाह बृहस्पतिः । लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा । यत्रोपविष्टा विप्राः स्युः सा यज्ञ-
20 सदृशी सभेति ॥ स एव । शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची । नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥ शब्दः शब्दशास्त्रम् । अभिधानं कोशः । कात्यायनः । श्रोतारो वणिजस्तत्र कर्त्तव्या न्यायदर्शिनः ॥

तत्र सभायाम् ॥ बृहस्पतिः । आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् । सभ्याधीनः सत्यवादी कर्तव्यस्तु सपूरुषः । अयं च शूद्र एव । तथाच व्यासः । साध्यपालस्तु
25 कर्तव्यो राज्ञा साध्यस्य साधकः । क्रमायातो दृढः शूद्रः सभ्यानां च मते स्थित इति ॥ याज्ञवल्क्यः ( व्य० श्लो० ३ ) । अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु । सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥

नृपाध्यक्षादीनां कार्यमाह बृहस्पतिः । वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः । गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ॥ स एव । पूर्वामुखस्तूपविशेद्राजा
30 सभ्या उदङ्मुखाः । गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः ॥

---

(१) वी० प० १ पृ० २
(२) वी० प० ४ पृ० १
(३) वी० प० ४ पृ० २
(४) मि० [illegible] १, वी० प० ४ पृ० ३
(५) वी० प० १० पृ० १
(६) वी० प० ११ पृ० १
(७) वी० प० ११ पृ० २
(८) वी० प० १२ पृ० १ , (९) वी० प० १२ पृ० २

राजसभातो निर्णयकान्तरमाह याज्ञवल्क्यः (व्य० श्लो० ३०)। नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च। पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम्॥ नृपेणाधिकृताः प्राड्विवाकादयः। पूगाः नानाकर्मोपजीविनामेकग्रामस्थानां विजातीयानां समूहः। पूगविपरीताश्च श्रेणयः। कुलानि ज्ञातिसम्बन्धिबन्धूनां समूहः॥ बृहस्पतिरपि। ये चारण्यचरास्तेषामरण्ये करणं भवेत्। सेनायां सैनिकानां तु सार्थेषु वणिजां तथा॥ करणं सभा॥

व्यवहारदर्शने कालमाह कात्यायनः। सभास्थानेषु पूर्वाह्णे कार्याणां निर्णयं नृपः। कुर्याच्छास्त्रप्रणीतेन मार्गेणामित्रकर्षणः॥ दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत्। स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः॥ आद्ययामार्धमष्टमो भागस्तदुत्तरमावर्तनात्प्राचीनं भागत्रयम्॥

वर्ज्यास्तिथीश्चाह संवर्तः। चतुर्दशी ह्यमावास्या पौर्णमासी तथाष्टमी। तिथिष्वासु न पश्येत व्यवहारान्विचक्षणः इति॥ बृहस्पतिः। पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविभिः। पश्येत्पुराणधर्मार्थशास्त्राणि शृणुयात्तथा॥ तां सभाम्॥ अर्थशास्त्रं नीतिशास्त्रम्॥

धर्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तावाह नारदः। यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः। अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेदिति॥

धर्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तौ।

धर्मशास्त्रयोर्विरोधे त्वाह याज्ञवल्क्यः (व्य० श्लो० २१)। स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः॥ न्यायमनालोचयतो दोषमाह बृहस्पतिः। केवलं शास्त्रमाश्रित्य न कर्तव्यो हि निर्णयः। युक्तिहीने विचारे तु धर्महानिः प्रजायते इति॥

धर्मशास्त्रयोर्विरोधे।

देशाचाराद्यप्यालोचयेदित्याह बृहस्पतिः। देशजातिकुलानां च ये धर्माः प्राक्प्रवर्तिताः। तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा॥ जनापरक्तिर्भवति बलं कोशश्च नश्यति। उद्वाह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः॥ मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः। मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः॥ उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः। अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः इति॥ पूर्वे प्राच्याः। क्वचित्सर्वे इति पाठः। सर्वे ब्राह्मणादयः। दमो दण्डः। यत्तत्र प्रायश्चित्तादिस्मरणं तदेतद्वाक्यानुपालदेशपरमिति केचित्। अन्ये तु प्रायश्चित्तरूपो यो दम इति व्याचक्षाणा दण्डाभावमात्रम् अन्यदेशे दण्डप्रायश्चित्ते चेत्याहुः॥ व्यासः। वणिक्शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु। अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव तु कारयेत्॥ मनुः (अ० ८ श्लो० ३९०)। आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः। न विब्रूयान्नृपो धर्मं चिकीर्षन्हितमात्मनः इति॥

देशादिधर्मविषये।

कात्यायनः। काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम्। किं कार्यं का च ते

(१) बी० पु० १२ पृ० २
(२) तु (ग)
(३) बी० पु० ९ पृ० २
(४) बी० पु० ९ पृ० २
(५) बी० पु० ६ पृ० १
(६) बी० पु० ६ पृ० १
(७) बी० पु० १० पृ० १

पीडा मा भैषीर्ब्रूहि मानव ॥ केन कस्मिन्कदा कस्मात्पृच्छेदेव सभागतम् । एवं पृष्टः स यद्ब्रूयात्सभ्यैर्ब्राह्मणैः सह ॥ विचार्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् । मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत् ॥

आसेधश्चतुर्विधः ।

नारदः । वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः । आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥ आसेधस्य चातुर्विध्यमाह स एव । स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा । चतुर्विधः स्यादासेधस्तमासिद्धो न लङ्घयेत् ॥ आसिद्धस्यासेधातिक्रमे दण्डमाह स एव । आसेधयोग्य आसिद्ध उत्क्रामन्दण्डमर्हति ॥ क्वचिदासेद्धुरेव दण्डमाह स एव । यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वसनादिभिः । आसेधयेदनासेध्यं स दण्ड्यो न त्वतिक्रमादिति ॥ क्वचिदासेधातिक्रमे दण्डाभावमाह नारदः । नदीसन्तारकान्तारदुर्देशोपप्लवादिषु । आसिद्धस्तु परासेधमुत्क्रामन्नापराध्नुयादिति ॥ अनासेध्यानासेद्धुर्दण्डमाह कात्यायनः । आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थितिरिति ॥ अनासेध्यानाह स एव । वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः । विषमस्थाश्च ते सर्वे नासेध्याः कार्यसाधकैः ॥

आह्वानानाह्वाने ।

व्याध्यार्त्ता व्यसनस्थाश्च यजमानस्तथैव च । अकल्पबालस्थविरविषमस्थक्रियाकुलान् ॥ कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् । मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वानयेन्नृप ॥ न हीनपक्षां युवतिं कुलेजातां प्रसूतिकाम् । सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः ॥ तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः । निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥ कालाभियोगेऽपि स्युर्वने प्रव्रजितादयः । तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥ कालं देशं च विज्ञाय कार्याणां च बलाबलम् । अकल्पादीनपि शनैः शनैराह्वानयेन्नृपः ॥ यानैरिति क्वचित्पाठः ॥

आहूतोऽनागच्छन् ।

आहूतोऽनागच्छन् दण्ड्यः । तथाच बृहस्पतिः । आहूतो यत्र नागच्छेद्दर्पाद्बन्धुकुलान्वितः । अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥ अभियोगभेदेन दण्डभेदमाह कात्यायनः । हीने कर्मणि पञ्चाशन्मध्यमे तु शतावरः । गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः इति ।

आहूतस्यागमने यत्कार्यं तदाह पितामहः । सभायाः पुरतः स्थाप्योऽभियुक्तो वादिना तथेति ॥ तृतीया सहार्थे ॥

कात्यायनः । ततोऽभियोक्ता प्रब्रूयादभियुक्तस्त्वनन्तरम् । तयोरन्ते सदस्यास्तु प्राड्विवाकस्ततः परम् ॥ बृहस्पतिः । अहम्पूर्विकया यातावर्थिप्रत्यर्थिनौ यदा । वादो

(१) वी० प० १९ पृ० १
(२) वी० प० १९ पृ० २
(३) वी० प० १० पृ० २
(४) आह्वाने व्यवस्थामाह नारदः (ब)
(५) शनैराह्वानयेन्नृप इति वीरमित्रोदये
(६) वी० प० १० पृ० १
(७) ततो (ख) (ग)
(८) वी० प० १८ पृ० १

अन्ये वा ये पुरग्राममहाजनविरोधकाः । अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिता इति ॥ न चानेकप्रतिज्ञत्वमपि पक्षाभासत्वमिति । बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम् । कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सयेति कात्यायनीयेन विरोधापत्तेः ॥ यत्तु अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यतीति तद्युगपन्न सिध्यति क्रमेण तु सिध्यतीति व्याख्येयम् ॥

एवं पूर्वपक्षे लिखिते यत्कार्यं तदाह याज्ञवल्क्यः (व्य० श्लो० ७) । श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधाविति[1] ॥

उत्तरम्।

उत्तरं लक्षयति नारदः । पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् । अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥ अस्य चातुर्विध्यमाह कात्यायनः । मिथ्या संप्रतिपत्त्या वा प्रत्यवस्कन्दनेन वा । प्राङ्न्यायप्रतिसिद्ध्या वा उत्तरं स्याच्चतुर्विधमिति ॥

मिथ्योत्तरम्।

मिथ्योत्तरं च लक्षयति स एव । अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् । मिथ्या तत्तु विजानीयादुत्तरं व्यवहारत इति ॥ तच्च चतुर्विधमित्याह स एव । मिथ्यैतन्नाभिजानामि तदा मेऽभूदसंनिधिः । अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधमिति ॥

सत्योत्तरम्।

संप्रतिपत्त्युत्तरं तूक्तं स्मृत्यन्तरे । साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृतेति[3] ॥

कारणोत्तरम्।

प्रत्यवस्कन्दनोत्तरं लक्षयति नारदः । अर्थिना लिखितो योऽर्थः प्रत्यर्थी यदि तं तथा । प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतमिति[4] ॥

प्राङ्न्यायोत्तरम्।

प्राङ्न्यायोत्तरं लक्षयति कात्यायनः । आचारेणावसन्नोऽपि पुनर्लेखयते यदि । सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यत इति ॥ एवमुत्तरलक्षणे स्थिते तद्रहितानामुत्तराभासत्वमर्थसिद्धमपि स्पष्टीकृतं स्मृत्यन्तरे । संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च । पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत् ॥ यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् । व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये इति ॥ कात्यायनोऽपि । पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् । मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरमिति ॥ अनुत्तरत्वे च कारणमाह स एव । न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः । न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयमिति ॥

क्रियानिर्णय।

अत्रायमर्थः । मिथ्याकारणोत्तरयोः सङ्करे द्वयोरपि वादिनोः क्रिया प्राप्नोति । मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनीति नारदोक्तेः । तदुभयमेकस्मिन्व्यवहारे विरुद्धम् । तथा कारणप्राङ्न्यायसङ्करे तु प्रत्यर्थिन एव क्रियाद्वयम् । प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियामिति व्यासोक्तेः ॥ अत्र च प्राङ्न्याये जयपत्रेण प्राड्विवाकादिभिस्तथेति व्यासोक्त्यैव प्राङ्न्याये जयपत्रेण प्राङ्न्यायदर्शिभिर्वा भावयितव्यम् ॥ कारणोत्तरे तु साक्षिलेख्यादिभिरित्यत्रापि विरोधः । एवं त्रिचतुस्स-

---

(१) वी० प० २२ पृ० २

(२) मि० व्य० प० ४ पृ० १, वी० प० २२ पृ० २

(३) वी० प० २३ पृ० १ मि० व्य० प० ४ पृ० २

(४) वी० प० २३ पृ० २ मि० व्य० प० ४ पृ० २

(५) वी० प० २४ पृ० १, मि० व्य० प० ४ पृ० २.

(६) वी० प० २५ पृ० २, मि० व्य० प० ४ पृ० २.

(७) वी० प० २५ पृ० २, मि० व्य० प० ४ पृ० २.

(८) मि० व्य० प० ५ पृ० १.

द्भरेऽपि द्रष्टव्यम् । एतेषां चानुत्तरत्वं यौगपद्येन । क्रमेण तूत्तरत्वमेव ॥ क्रमश्चार्थिप्रत्य-र्थिसम्भवेच्छया भवति ॥ तथाच हारीत । मिथ्योत्तर कारणं च स्यातामेकत्र चेदुभे । सत्यं चापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥ यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् । उत्तर तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ॥ सकीर्णं भवतीति शेष । अस्यार्थ । सुवर्णव-स्त्राभियोगे सुवर्णं न गृहीत वस्त्र तु गृहीत प्रतिदत्त वेत्यादौ सुवर्णविषये व्यवहृत्य पश्चाद्वस्त्रविषये व्यवहर्तव्यम् । एव मिथ्याप्राङ्न्याययो कारणप्राङ्न्याययोश्च सङ्करे योऽयम् ॥ तथा तत्रैवाभियोगे सुवर्णं गृहीत वस्त्र तु न गृहीत प्रतिदत्तमिति वा वस्त्र विषये पूर्वं जित इति वोच्यते । तत्र वस्त्रविषय एव व्यवहर्तव्यम् । न सुवर्णविषये । भूरिविषयत्वेऽपि क्रियाभावात् ॥ यत्र त्विय गौर्मदीयाऽमुकस्मिन्काले नष्टाद्यास्य गृहे दृष्टेत्यभियोगे मिथ्यैतदेतत्प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थितेति मिथ्याकारणयो कृत्स्नपक्षव्यापित्व तत्र नानुत्तरत्वम । सकारण मिथ्योत्तरमिदम् ॥ अत्र च प्रत्यर्थिन एव क्रिया नार्थिन । मिथ्याकारणयोर्वापि ग्राह्य कारणमुत्तरमिति हारीतोक्ते ॥ एव मिथ्याप्राङ्न्याययो कारणप्राङ्न्याययोश्च कृत्स्नपक्षव्यापित्वे सति नानुत्तरत्वम् । अत्रोभयत्रापि प्रत्यर्थिन एव क्रियेति । न चाप्येकस्मिन्व्यवहारे द्वयो क्रियेत्यलम् ॥

उत्तरलेखनोत्तर साधनोक्तौ क्रममाह याज्ञवल्क्य (व्य० श्लो० ७(८) । ततोऽर्थी लेखयेत्सद्य प्रतिज्ञातार्थसाधनम् । तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथेति ॥ इद च मिथ्योत्तरविषयम् ॥ उत्तरान्तरे तु प्रत्यर्थिन एव साधनोपन्यास । यथाह हारीत । प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥ एव व्यवहारस्य चतुष्पात्त्वमाह याज्ञवल्क्य ( व्य० श्लो० ८ ) । चतुष्पाद्व्यवहारोऽय विवादेषूपदर्शित इति ॥ पादचतुष्टय तु व्यक्तीकृत स्मृत्यन्तरे । भाषोत्तरक्रियासाध्यसिद्धिभि क्रमवृत्तिभि । आक्षिप्तचतुरशस्तु चतुष्पादभिधीयते इति ॥ इद च सप्रतिपत्त्यतिरिक्तोत्तरविषयम् । सप्रतिपत्तौ द्विपात्त्वात् । यथाह बृहस्पति । मिथ्योत्तरे चतुष्पात्स्यात्प्रत्यवस्कन्दने तथा । व्यवहारस्तु विज्ञेयो द्विपात्प्रतिपत्तिष्विति ॥ याज्ञवल्क्य (व्य० श्लो० ९।१०) । अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् । अभियुक्त च नान्येन नोक्त विप्रकृतिं नयेत् ॥ कुर्यात्प्रत्यभियोग च कलहे

प्रत्यभियोग ।

साहसेषु च ॥ नारद । पूर्ववाद परित्यज्य योऽन्यमालम्बते पुन । वादसङ्क्रमणाज्ज्ञेयो हीनवादी स वै नर ॥ हीनवादी दण्ड्यो भवति न प्रकृताद र्थाद्धीयत इत्यर्थ । एतच्चार्यव्यवहारे ज्ञेयम् । यथाह स एव । सर्वेष्वर्थविवादेषु वाक्छले-नावसीदति । परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्नहीयते इति ॥ पूर्वार्धस्योदाहरणार्थमु-त्तरार्धम् । याज्ञवल्क्य (व्य० श्लो० १७) । साक्षिषूभयत सत्सु साक्षिण पूर्ववादिन । पूर्वपक्षे ऽधरीभूते भवन्त्युत्तरवादिन ॥ पूर्ववादिन प्रतिज्ञावादिन । पूर्वपक्ष प्रतिज्ञा

(१) वी० प० २९ पृ० १ मि० व्य० प० ६ पृ० २
(२) न्ये (ड)
(३) नोपि (क) (ख) (ग) (घ)
(४) मि० व्य० प० ६ पृ० १
(५) मि० व्य० प० ६ पृ० २
(६) नौ हि (ग)
(७) मि० व्य० प० ७ पृ० १

अधरीभूते कारणोत्तरोपन्यासेन प्रत्यर्थिस्वीकारेणासाध्ये ॥ साक्षिग्रहणं प्रमाणान्तरस्याप्युपलक्षणार्थम् । स एव (व्य० श्लो० १०)। उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये । निर्णयस्य कार्यं कार्यनिर्णय इति ॥

प्रतिभूः ।

प्रतिभूत्वेनाग्राह्यानाह कात्यायनः । न स्वामी न च वै शत्रुः स्वामिनाऽधिकृतस्तथा । निरुद्धो दण्डितश्चैव संशयस्थो न च क्वचित् ॥ नैव रिक्थी न रिक्तश्च न चैवान्यत्र वासितः । राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ॥ नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् । नाविज्ञातो ग्रहीतव्यः प्रतिभूत्वक्रिया प्रतीति ॥ निरुद्धो निगडादिबद्धः । संशयस्थो व्यसनी । रिक्थी पुत्रपौत्रादिर्द्रव्यग्रहणाधिकारी । रिक्तो दरिद्रः । अन्यत्र वासितो देशाद्बहिष्कृतः ॥ याज्ञवल्क्यः (व्य० श्लो० ५२)। भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि । प्रातिभाव्यमृणं साक्ष्यमविभक्ते तु न स्मृतम् ॥

अग्राह्य ।

लग्नकाभाव त्वाह कात्यायनः । अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः । स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनमिति ॥ स एव । द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद्ब्रह्मचारिभिः । शूद्रादीन्प्रतिभूहीनान्बन्धयेन्निगडेन त्विति ॥ हीनवादिलक्षणान्याह नारदः । पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः । वादसङ्क्रमणाज्ज्ञेयो हीनवादी स वै नर इति ॥

तदभावे ।

दुष्टं लक्षयति याज्ञवल्क्यः (व्य० श्लो० १३।१४।१५)। देशाद्देशान्तरं याति सृक्किणी परिलेढि च । ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते । वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः । अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्तितः ॥ सृक्किणी ओष्ठप्रान्तौ ॥

---

## ॥ अथ प्रमाणनिरूपणम् ॥

याज्ञवल्क्यः (व्य० श्लो० २२)। प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् । एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ कात्यायनोऽपि । यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् । मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥ यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी । सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥ क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु । लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥ पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता । तस्यास्तु साधनं लेख्यं न दिव्यं न च

प्रमाणनिरूपणम् । तदनुक्रमः ।

---

(२) मौ० पृ० १८ पं० १

(३) वी० पृ० ३५ पं० २

(१) मि० आ० पृ० ३१, पं० ६, वी० पृ० ३५ पं० ८

साक्षिणं ॥ दत्त्वाऽदत्ते तथाऽदत्ते स्वामिनो[1] निर्णये सति[2] ॥ विक्रयादानसम्बन्धे क्रीता धनमनिच्छति ॥ द्यूते समाह्वये चैव[3] विवादे समुपस्थिते । साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥ द्वारमार्गक्रियाभोगे जलवाहादिके तथा । भुक्तिरेव हि गुर्वी स्यान्न लेख्यं न च साक्षिणः ॥

क्वचिद्दिव्यप्राबल्यमाह बृहस्पतिः । मणिमुक्ताप्रवालानां कूटकृन्न्यासहारकः । हिंसकोऽन्याङ्गनासेवी परीक्ष्याः शपथैः सदा ॥ महापापाभिशापेषु विद्यमानेषु साक्षिषु । दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः इति ॥ व्यासः । न मयैतत्कृतं लेख्यं कूटमेतेन कारितम् । अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥ अरण्ये विजने रात्रावन्तर्वेश्मनि साहसे । न्यासापह्नवने चैव दिव्या संभवति क्रिया ॥ बृहस्पतिः । लिखिते साक्षिवादे च सन्दिग्धं यत्र जायते । अनुमाने च सम्भ्रान्ते तत्र दिव्यं विशोधनम् ॥ 1

क्वचित्साक्षिदिव्ययोर्विकल्पमाह स एव । प्रकान्ते साहसे वादे पारुष्ये दण्डवाचिके । बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव वा[4] ॥ ऋणे लेख्यं साक्षिणो वा युक्तिलेशादयोऽपि वा । दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्ययेति ॥ युक्तिलेशो युक्त्येकदेशः । वाचिके पारुष्ये ब्रह्महासीत्येवमाद्याक्रोशात्मकः इत्यर्थः ॥ यत्तु कात्यायनः । वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेदिति तदल्पवाक्पारुष्यपरम् ॥ 15 भूमिग्रहणं स्थावरमात्रोपलक्षणार्थम् ॥ यथाह पितामहः । स्थावरेषु विवादेषु दिव्यानि परिवर्जयेदिति ॥ साक्ष्यादिसत्त्वेऽपि दिव्यनिषेधः ॥ तथाच स एव । साक्षिभिर्लिखितेनाथ भुक्त्या चेतान्प्रसाधयेदिति ॥ स एव । लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः । न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥ निश्चेतुं ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः । तेषां नृपः प्रमाणं स्यात्स सर्वस्य प्रभुर्यतः ॥ 20

॥ इति व्यवहारमातृका समाप्ता ॥

---

## ॥ अथ लेख्यम् ॥

तत्र बृहस्पतिः । राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा । लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनरिति ॥ यत्तु वसिष्ठेन लौकिकं राजकीयं च लेख्यं विद्याद्द्विलक्षणमिति द्वैविध्यमुक्तं तत्स्थानकृतस्वहस्तलिखितयोरभेदमाश्रित्य ॥ लौकिकं जानपदमिति पर्यायौ । राजकीयं जानपदं लिखितं द्विविधं स्मृतमिति संग्रहकारोक्तेः ॥ बृहस्पतिः । भागदानक्रयाधानसंविद्दासऋणादिभिः । सप्तधा लौकिकं लेख्यं त्रिविधं 25

(margin note: ल्यकम् । तद्बहुदा ।)

---

(१) वी० प० ३९ पृ० २

(२) नो (ङ) (च)

(३) दत्त्वाऽदत्ते दत्तमिति प्रतिश्रुत्याऽनर्पिते ॥ तथाऽदत्ते दत्त्वा पुनराच्छिद्य गृहीते ॥ स्वामिना निर्णये सति एतत् स्वामिकमेतदिति निश्चये सतीति ॥ क्वचित् पुस्तकेऽधिकं दृश्यते (ङ) दत्त्वाऽदत्ते तथाऽदत्ते इत्यत्र दत्ताऽदत्तेऽन भृत्यानामिति मिताक्षरायां । दत्ताऽदत्तेऽथ भृत्यानामिति वीरमित्रोदये (मि० व्य० प० ११ पृ० १ वी० प० ३९ पृ० २ )

(४) मि० व्य० प० ११ पृ० १

(५) वी० प० ९९ पृ० २

राजशासनम् ॥ भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम् । विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥ भूमिं दत्त्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम् । अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥ गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् । पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥ जङ्गमं स्थावरं बन्धं दत्त्वा लेख्यं करोति यत् । 5 गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते ॥ ग्रामो देशश्च यत्कुर्यान्मतं लेख्यं परस्परम् । राजाविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत् ॥ वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत् । कर्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥ धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत् । उद्धारपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥ आदिशब्दाद्विशुद्ध्यादिपत्रग्रहणम् ॥

10 विशुद्ध्यादिपत्राण्याह कात्यायनः । अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः । विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम् ॥ उत्तमेषु समस्तेषु अभिशापे समागते । वृत्तानुवादे लेख्यं यत्तज्ज्ञेयं सन्धिपत्रकम् ॥ सीमाविवादे निर्णीते सीमापत्रं विधीयत इति ॥

अन्याधिपत्रमाह प्रजापतिः । धनी धनेन तेनैव परमाधिं नयेद्यदि । कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेत् ॥ याज्ञवल्क्योऽपि (व्य० श्लो० ९४) । दत्त्वर्णं 15 पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत् ॥ पूर्वोक्तयोः स्वहस्तान्यहस्तकृतयोर्विशेषमाह

लख्यरीति ।

नारदः । लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा । असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोरिति ॥ याज्ञवल्क्यः (व्य० श्लो० ८९) । विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् । तत्प्रमाणं स्मृतं लेख्यं 20 बलोपधिकृतादृते ॥ बलं बलात्कारः । उपधिर्लोभादि ॥ अन्यकृते विशेषमाह स एव (व्य० श्लो० ८४) । यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् । लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम् ॥ समामासतदर्धाहर्नामजातिस्वगोत्रकैः । सब्रह्मचारिकात्मीयपितृनामादिचिह्नितमिति ॥ सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठ इत्यादि ॥ स एव (व्य० श्लो० ८६) । समाप्ते र्थे ऋणी नाम स्वहस्तेन 25 निवेशयेत् । मतं मेऽमुकपुत्रस्य यदत्रोपरिलेखितम् ॥ साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् । अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥ उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना । लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥ समाः संख्यातो गुणतश्च । क्वाचिदसमा इत्यत्राकारप्रश्लेषः ॥ नारदः । अलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत् । साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः ॥

30 त्रिविधं राजशासनमित्युक्तं तद्दर्शयतो याज्ञवल्क्यबृहस्पती (आ० श्लो० ३१८ । ३१९ । ३२० ) । दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् । आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ पटे वा

राजशासनम् ।

ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् । अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥

(१) क (ख)
(२) नी० प० १० पृ० १
(३) मि० व्य० पृ० ४४ पृ० १
(४) मा० प० ६ पृ० १

प्रतिग्रहपरिमाण दानच्छेदोपवर्णनम् । स्वहस्तकालसम्पन्न शासन कारयेत्स्थिरम् ॥ निबध आकरादौ राजादिदत्त नियतलभ्यम् ॥ प्रतिगृह्यते यस्य प्रतिग्रहो भूम्यादि तस्य परिमाणमियत्ता । दीयते यत्तदान गृहादि तस्य छेदो मर्यादा तस्या उप वर्णन कथनम् ॥ तथा । देशादिक यस्य राजा लिखितेन प्रयच्छति । सेवाशौर्या दिना तुष्ट प्रसादलिखित तु तत् ॥ पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृप । प्रदद्याज्ज यिने लेख्य जयपत्र तदुच्यत इति ॥ राज्ञोऽनुकल्पमाह व्यास । राज्ञा तु स्वयमादिष्ट सधिविग्रहलेखक । ताम्रपट्टे पटे वापि प्रलिखेद्राजशासनम् ॥ 5

अत्र च राज्ञा स्वमत लेख्यमित्याह स एव । सनिवेश प्रमाण च स्वहस्तेन लि खे स्वयम । मत मेऽमुकपुत्रस्य अमुकस्य महीपते ॥ सनिवेश प्रमाण चेति पूर्वेवा क्यैनान्वय ॥ वसिष्ठस्तु राजलेख्यस्य चातुर्विध्यमाह । शासन प्रथम ज्ञेय जयपत्र तथा परम् । आज्ञाप्रज्ञापनापत्रे राजकीय चतुर्विधम् ॥ सामन्तेष्वथ भृत्येषु राष्ट्रपा लादिकेषु च । कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥ ऋत्विक्पुरोहिताचार्यमान्ये ष्वभ्यर्हितेषु च । कार्यं निवेद्यते येन पत्र प्रज्ञापनाय तत् ॥ शासनजयपत्रे प्रागुक्ते ॥ 10

जीर्णादिपत्रविषय । याज्ञवल्क्य (व्य० श्लो० ९१)। देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा । भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत् ॥ 15

नारद । लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते । सतस्तत्कालकरणमसतो द्रष्टृदर्शनम् ॥ द्रष्टार साक्षिण ॥

तदभावे दिव्यम् । अलेख्यसाक्षिके दिव्य व्यवहारे विनिर्दिशेदिति कात्याय नोक्ते ॥ याज्ञवल्क्य (व्य० श्लो० ९२) । सदिग्धलेख्यशुद्धि स्यात्स्वहस्तलिखिता दिभि । युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभि ॥ युक्तिरर्थापत्ति । प्राप्तिर्द्वयोरेकत्राव स्थानम । चिह्न मुद्रादि । क्रिया साक्ष्यादि । सम्बन्धोऽन्यागत । आगम सम्भावित प्राप्त्युपाय । हेतुरनुमानम् ॥ प्रजापति । कार्यो व नेन महता निर्णयो राजशासने । राज्ञा स्वहस्ततो मुद्रालेखकाक्षरदर्शनात् ॥ दुष्टलेख्यान्याह 20

दुष्टलेख्यम् । बृहस्पति । मुमूर्षुशत्रुभीतार्तस्त्रीमत्तव्यसनातुरे । निरुपाधि बलात्कारकृत लेख्य न सिध्यति ॥ दूषितो गर्हित साक्षी यत्रैको विनिवेशित । कूटलेख्य तु तत्प्रोक्त लेखको वापि तद्विध इति ॥ 25

॥ इति लेख्यप्रकरणम् ॥

---

## ॥ अथ भुक्ति ॥

भुक्ति । नारद । आगमेन विशुद्धेन भोगो याति प्रमाणताम् । अविशुद्धागमो भोग प्रामाण्य नैव गच्छति ॥ सागमत्वव्द्विशेषणान्तरवैशिष्ट्यम प्याह व्यास । सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झित । 30

---

(१) वी० प० ६१ पृ० २
(२) मि०व्य०प०१४४पृ०२ वी०प०६१पृ०२
(३) वी० प०६२ पृ० १
(४) मि० प० १३ पृ० २ वी० प० ६४ पृ० १

प्रत्यर्थिसंनिधानश्च पञ्चाङ्गो भोग इष्यते ॥ भुक्तिमात्रेण साध्यासिद्धिमाह नारदः । सम्भोगं केवलं यस्तु कीर्तयेन्नागमं क्वचित् । भोगच्छलापदेशेन विज्ञेयः स तु तस्करः इति ॥ इदं चागमस्मरणयोग्ये काले ज्ञेयम् ॥ तदयोग्ये तु भुक्तिमात्रमपि प्रमाणमित्याह स एव । स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते । अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागतेति ॥ अनुगमाभावाद्योग्यानुपलब्ध्या आगमाभावनिश्चयस्यासम्भवात् ॥ अस्मार्तेऽप्यागमाभावस्मरणानुवृत्तावाह स एव । अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिरिति ॥ यत्तु स एव अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतमिति तदागमं विनाप्यन्यायेनापि यत्पित्रासह पूर्वतरैस्त्रिभिर्भुक्तं तदपाहर्तुं न शक्यम् किंपुनरागमाभावनिश्चयासम्भव इति योज्यम् ॥ यदपि हारीतीयम् यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतमिति तदत्यन्तोपलभ्यमानागमं विनेति व्याख्येयम् । न चागमस्वरूपं विनेति ॥ यत्पुनर्याज्ञवल्कीयम् (व्य० श्लो० २८) आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् । न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसीति तदागमकर्तुरेवागमानुद्धारे दण्डोन तत्पुत्रादीनामपीत्येवम्परम् । न स्वर्थासिद्धिरिति ॥ यथाह हारीतः । आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् । न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपीति ॥ याज्ञवल्क्यः (व्य० श्लो० २९) । योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् । न तत्र कारणं भुक्तिरागमेन विना कृता ॥ रिक्थी अंशभागी पुत्रादि । तमागमम् ॥ ननु दीर्घकाले भोगः प्रमाणमिति विरुद्धम् । यतः स्वल्पकालोपभोगेनाप्यभियोक्तुर्हानिः प्रतीयते । यथाह स एव (व्य० श्लो० २४) । पश्यतो ब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी । परेण भुज्यमानाया धनस्य दशवार्षिकी । उच्यते । एतत्पश्यतोऽप्रतिषेधतस्तावत्कालीनतद्भूम्यादिजन्यफलहानिर्भवतीत्येवम्परम् । न तु तद्भूम्यादिवस्तुहानिरपीति । अनागमं तु यो भुङ्क्ते इत्युदाहृतवचनविरोधात् ॥ कात्यायनः । नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः । नारदः । आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः । राजस्वं श्रोत्रियस्वं च नोपभोगेन नश्यति । मनुः (अ० ८ श्लो० १४९) । सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन । धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥ दम्यः प्रयुज्यते दमनार्थं यः समर्प्यते ॥

लभ्यमानम् ।

अनागमोपभोगे ।

॥ इति भुक्तिप्रकरणम् ॥

---

(१) मि० व्य० प० ११ पृ० २, वी० प० ६४ पृ० १
(२) वी० प० ६४ पृ० १
(३) मि० व्य० प० १४ पृ० १ वी० प० ६४ पृ० २
(४) मि० व्य० प० १४ पृ० १
(५) मि० व्य० प० ११ पृ० १
(६) वी० प० ६२ पृ० २
(७) मि० व्य० प० १२ पृ० १

## ॥ अथ साक्षिण ॥

टोडरानन्दे नारद । संदिग्धेषु तु कार्येषु द्वयोर्विवदमानयो । दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तदर्शनम् ॥ तद्भेदानाह बृहस्पति । लिखितो लेखितो गूढ स्मारित कुल्यदूतकौ । यादृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपर ॥ नृपोऽध्यक्षस्तथा ग्राम साक्षी द्वादश स्मृत ॥ अर्थिना पत्रे निवेशितो लिखित । प्रत्यर्थिनार्थिप्रेरणया निवेशितो लेखित । कुड्यादिव्यवधानेन श्रावितो गूढ । पुन पुन कार्यं स्मार्यमाण स्मारित । यदृच्छयैवागत साक्षी क्रियमाणो यादृच्छिक । श्रवणाच्छ्रावणाद्वा साक्षिणामप्युपर्युपरि भाषमाण उत्तर । अध्यक्ष प्राड्विवाक ॥ इद च सभ्यादीनामुपलक्षणम् । लेखक प्राड्विवाकश्च सभ्याश्चैवानुपूर्वश इति कात्यायनवाक्यात् । स एव । नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा । उभौ वा श्रोत्रियौ ग्राह्यौ नैक पृच्छेत्कदाचन ॥ लिखितौ द्वौ तथा गूढौ त्रिचतु पञ्च लेखिता । यदृच्छास्मारित कुल्यास्तथा चोत्तरसाक्षिण ॥ दूतक खटिकाग्राही कार्यमध्यगतस्तथा । एक एव प्रमाण स्यान्नृपोऽध्यक्षस्तथैव च ॥ लिखितादीनामुभयानुमतत्व एकस्यापि ग्रहणमाह याज्ञवल्क्य (व्य० श्लो० ७२) । उभयानुमत साक्षी भवत्येकोऽपि धर्मवित् । व्यास । शुचिक्रियश्च धर्मज्ञ साक्षी यस्त्वनुभूतवाक् । प्रमाणमेकोऽपि भवेत्साहसेषु विशेषत ॥ अनुभूतवाक् प्रायो दृष्टसत्यवचा ॥ निक्षेपादिष्वनाप्तमप्येकमाह कात्यायन । अभ्यन्तरस्थनिक्षेपे साक्ष्यमेकोऽपि वाच्यते । अर्थिना प्रहित साक्षी भवेदेकोऽपि याचिते ॥ याचित विवाहाद्यर्थमानीतमाभरणादिक कुण्डलादि ॥ पण्यविवादेऽप्येकमाह स एव । संस्कृत येन यत्पण्य तत्तेनैव विभावयेत । एक एव प्रमाण स विवादे तत्र कीर्तित ॥ तेषा च स्वरूपमाह व्यास । धर्मज्ञा पुत्रिणो मौला कुलीना सत्यवादिन । श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सरा ॥ श्रोत्रिया नपराधीना सूरयश्चाप्रवासिन । युवान साक्षिण कार्या ऋणादिषु विजानता ॥ नारद । श्रेणिषु श्रेणिपुरुषा स्वेषु वर्गेषु वर्गिण । बहिर्वासिषु बाह्या स्यु स्त्रिय स्त्रीषु च साक्षिण ॥ वर्गिण आह कात्यायन ॥ लिङ्गिन श्रेणिपूगाश्च वणिग्व्रातास्तथापरे । समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्गुरु ॥ दास चारणमल्लाना हस्त्यश्वरयजीविनाम् । प्रत्येकैकसमूहाना नायका वर्गिण स्मृता ॥ विजातीयानाह याज्ञवल्क्य । (व्य० श्लो० ६९) । त्र्यवरा साक्षिणो ज्ञेया श्रौतस्मार्तक्रियापरा । यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृता ॥

वर्ज्यानाह स एव (व्य० श्लो० ७० । ७१) । स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तका । रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रिया ॥ पतिताप्तार्थसम्बन्धिसहायरिपुतस्करा । साहसी दृष्टदोषश्च निर्धूताद्यास्त्व

साक्षिण । तत्स्वरूपम् ।

तथा सख्या । एकसाक्षिविषये ।

असाक्षिण ।

(१) वी० प० ४४ पृ० २
(२) वी० प० ४५ पृ० २
(३) वी० प० ४७ पृ० १
(४) वी० प० ४७ पृ० २
(५) वी० प० ४६ पृ० १

साक्षिणः ॥ निर्धूतः स्वजनैस्त्यक्तः । आदिशब्देन दासाद्याः । बृहस्पतिः । मातुः पिता पितृव्यश्च भार्याया भ्रातृमातुलौ । भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ॥ नारदः । अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् । स्वयमुक्तिः स शास्त्रेषु न स साक्षित्वमर्हति ॥ कात्यायनः । साक्षिणां लिखितानां च निर्दिष्टानां च वादिना । तेषामेकोऽन्यथावादी
5 भवेत्सर्वे न साक्षिणः । एतेषामपि क्वचित्साक्षित्वमाह नारदः ।

सदपवाद ।

असाक्षिणो ये निर्दिष्टा दासनैष्कृतिकादयः । कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥ असम्भवे मनुः ( अ० ८ श्लो० ७० ) । स्त्रियाप्यसम्भवे कार्यं बालेन स्थविरेण वा । शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ याज्ञवल्क्यः (व्य० श्लो० ७२) । सर्वः साक्षी सङ्ग्रहणे चौर्यपारुष्यसाहसे ॥ अत्र स्त्रीसङ्ग्रहणादीनां
10 साहसत्वेऽपि पृथगुपादानं गुप्ततया क्रियमाणस्त्रीसङ्ग्रहादिपरम् । उशना । दासोऽन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः । एतेऽप्यनभिसम्बद्धाः साहसे साक्षिणो मताः ॥ अनभिसंबद्धा अपक्षपातिनः ॥ बृहस्पतिः । साक्षिणोऽर्थे समुद्दिष्टान्सत्सु दोषेषु दूषयेत् । अदुष्टान्दूषयन्वादी तत्समं दण्डमर्हति ॥ वाद्यत्र प्रत्यर्थी । तत्समं विवादविषयीभूतद्रव्यसमम् ॥ व्यासः । साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
15 पत्रेऽभिलिखितान्सर्वान्वाच्याः प्रत्युत्तरं तु ते ॥ पत्रे लिखितान्साक्षिदोषान्प्रतिलक्षीकृत्य तद्विषयं परिहारं ते साक्षिणः सभ्यैर्वाचनीया इत्यर्थः ॥ स एव । प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कथंचन । अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥ अभावयन्दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम् । भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥ तथैव विनयं दाप्यः शास्त्रदृष्टेन कर्मणा । यदि

साक्षिदोषा । तत्र कर्तव्यता ।

20 वादी निराकाङ्क्षः साक्षिसत्त्वे व्यवस्थित इति ॥ अतोऽन्यथा असम्प्रतिपत्तौ । भावनीयाः अङ्गीकारयितव्याः । क्रियया प्रमाणेन स्फुटं यथा स्यात्तथाऽभावयन्नित्यन्वयः ॥ मनुः सभासदा दूषणं यल्लोकसिद्धमथापि वा । साक्षिणां दूषणं ग्राह्यं न साध्यं दोषवर्जनादिति तल्लोकावधारितासत्साक्षिविषयम् ॥ प्रतिवादिना दोषाज्ञाने स एव । प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना । गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥ गूढाः
25 शास्त्रप्रदर्शनेन साक्षिवादात्पूर्वकाले वक्तव्या इत्यर्थः ॥ अनन्तरं तु न वक्तव्या इत्याह बृहस्पतिः । लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः । वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥ उक्तान् उक्तवतः वक्तुमारब्धवत इत्यर्थः । आदिकर्मणि क्तः कर्तरि चेति कर्तरि क्तः ॥ अत्र दण्डमाह कात्यायनः । उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान् । न च तत्कारणं ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥ साक्षिणां सद्दूषणप-
30 रिहाराशक्तावर्थी तं कुर्यादित्याह बृहस्पतिः ॥ लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः । तस्य कार्यं न सिध्येत्तु यावत्तन्न विशोधयेत् ॥ तल्लेख्यादिकम् ॥

---

(१) वी० प० ४० पृ० २
(२) वी० प० ५० पृ० २
(३) वी० प० ४८ पृ० १
(४) 'र्थी' इति वीरमित्रोदये
(५) वी० प० ५१ पृ० १
(६) 'असाधयन्दमं दाप्यः' इत्यपि पाठः मिताक्षरायाम् (व्य० प० ३९ पृ० १) वीरमित्रोदये च (प० ५१ पृ० १)
(७) सभासदो भणितं यदिति वीरमित्रोदये. प० ५१ पृ० १
(८) वी० प० ५१ पृ० १

कूटसाक्षिकर्तुर्दण्डमाह कात्यायन । येन कार्यस्य लोभेन निर्दिष्टा कूटसाक्षिण । गृहीत्वा तस्य सर्वस्व कुर्यान्निर्विषय ततः । निर्विषय विवादविषयीभूतार्थरहितम् ॥

कूटसाक्षकरणे ।

दुष्टसाक्षिणा निश्चयोपायमाह नारदः । यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते । स्थानात्स्थानान्तर गच्छेदेकैक चानुधावति ॥ कासत्यकस्माच्च भृशमभीक्ष्ण निश्वसित्यपि । विलिखत्यवनिं पद्भ्या बाहू वासश्च धूनयेत् ॥ भिद्यते मुखवर्णोऽस्य ललाट स्विद्यते तथा । शोषमागच्छतश्चौष्ठावूर्ध्व तिर्यक् च वीक्षते ॥ त्वरमाण इवाबद्धमपृष्टो बहुभाषते । कूटसाक्षी स विज्ञेयस्त पाप विनयेद्दृशम् ॥ साक्षिणा प्रश्नप्रकारमाह कात्यायन । मनुरपि (अ० ८ श्लो० ८७।७९।८०) । देवब्राह्मणसान्निध्ये साक्ष्य पृच्छेदृत द्विजान । उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे च शुचि शुचीन् ॥ समान्त साक्षिण सर्वानर्थिप्रत्यर्थिसन्निधौ । प्राड्विवाको ऽनुयुञ्जीत विधिनानेन सान्त्वयन् ॥ यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिश्चेष्टित मिथ । तद्ब्रूत सर्वं सत्येन युष्माक ह्यत्र साक्षिता ॥ गवाश्वादिविवादेषु विप्रतिपन्नार्थसान्निध्यमप्याह स एव । अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ । प्रत्यक्ष चोदयेत्साक्ष्य न परोक्ष कथचन ॥ अर्थस्योपरि कर्तव्य तयोरपि विना क्वचित । चतुष्पादेषु धर्मोऽय द्विपदस्थावरेषु च ॥ तौल्यगणिममेयानामभावेऽपि हि वादयेत् । क्रियाकारेषु सर्वेषु साक्षित्व तत्त्वतोऽन्यथा ॥ तयोरपि विना क्वचित । तयोर्वादिप्रतिवादिनोर्विनाऽप्यर्थसनिधाने क्वचिच्चतुष्पादादिष्वित्यर्थ । तौल्य तोलनयोग्य सुवर्णादि । गणिम गणनीय नाणकादि । मेय मानयोग्य व्रीहिगोधूमादि । अभावेऽपि साध्यार्थसन्निधानाभावेऽपि । क्रियाकारेषु व्यवहारेषु ॥ वधरूपे विवादपदे साक्षिभाषण शिवसन्निधाविव्याह स एव । वधे चेत्प्राणिना साक्ष्य वादयेच्छिवसन्निधौ । तदभावे तु चिह्नस्य नान्यथैतत्प्रवादयेत् ॥ त साक्षिभाषण वधचिह्नस्याभावे कार्यम् । अन्यथा वधचिह्नसद्भावे ॥ स एव । न कालहरण कार्यं राज्ञा साक्षिप्रभाषणे । महादोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षण ॥ नारद । आहूय साक्षिण पृच्छेन्नियम्य शपथैर्भृशम् । समस्तान्विदिताचारान्विज्ञातार्थान्पृथक् पृथक् ॥ वसिष्ठ । समवेतैस्तु यद्दृष्ट वक्तव्य तु तथैव तत् । विभिन्नैनैव तत्कार्यं वक्तव्य तु पृथक् पृथक् ॥ भिन्नकाले तु यत्कार्यं विज्ञात यत्र साक्षिभि । एकैक वादयेत्तत्र विधिरेष प्रकीर्तित ॥ मनु (अ० ८ श्लो० ११३।१०२) । सत्येन शापयेद्विप्र क्षत्रिय वाहनायुधै । गोबीजकाञ्चनैर्वैश्य शूद्र सर्वैस्तु पातकै ॥ गोरक्षकान्वाणिजकास्तथा कारुकुशीलवान् । प्रेष्यान्वार्धुषिकाश्चैव विप्रान् शूद्रवदाचरेत् ॥ ये व्यपेता स्वकर्मभ्य परपिण्डोपजीविन । द्विजत्वमभिवाञ्छन्ति तांस्तु शूद्रवदाचरेदिति ॥ अन्यथा ब्रुवत सत्य ते नश्यतीत्येवमादिप्रकारेणेत्यर्थ ॥ साक्षिवचनपरीक्षामाह । देशकालवयोद्रव्यसज्ञाजातिप्रमाणत । अन्यून चेन्निगदित सिद्ध साध्य विनिर्दिशेत् ॥ साक्षिणा विप्रतिपत्तौ निर्णयमाह

साक्षिप्रश्ने ।

(१) वी० प० ५३ पृ० १
(२) वी० प० ५३ पृ० १
(३) वी० प० ५३ पृ० २
(४) नृ रपति (वी० प० ५४ पृ० १)

याज्ञवल्क्यः (व्य० श्लो० ७८)। द्वैधे बहूनां वचनं समेषु गुणिनां तथा। गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः॥ साक्ष्यमङ्गीकृत्यानभिधाने दण्डमाह स एव। (व्य० श्लो० ७९) अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम्। राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि। सर्वं वृद्धिसहितम्। साक्ष्यदाने।
5 सदशबन्धकं दशमांशसहितम्। दशमांशो राज्ञा ग्राह्यः– सवृद्धिकमृणमुत्तमर्णेन ग्राह्यमिति मिताक्षरायाम्॥ जानतः साक्ष्यानङ्गीकारे दण्डमाह स एव (व्य० श्लो० ८२)। यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः। स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत्॥ विवादपराजये यो दण्डस्तमष्टगुणं दाप्यः॥ दण्डदानासमर्थस्तु ब्राह्मणो निर्वास्यः क्षत्रियादिः स्वोचितं कर्म कारयितव्य इति मिताक्षरायाम्॥ मनुः॥ (अ०
10 ८ श्लो० १०८)। यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः। रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः॥ याज्ञवल्क्यः (व्य० श्लो० ८०)। उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः। द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः॥ नारदः। निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्। लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत्॥ क्वचित्साक्षिणोऽनृतवचनानुज्ञा प्रायश्चित्तं चाह याज्ञवल्क्यः (व्य० श्लो० ८३)।
15 वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्। तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः॥ शूद्रस्य प्रायश्चित्तमाह विष्णुः। शूद्रश्चैकाहिकं गोदशकस्य ग्रासं दद्यादिति॥ ऐकाहिकमेकस्मिन्नहनि भक्षयितुं पर्याप्तम्।

॥ इति साक्षिप्रकरणं समाप्तम्॥

---

## ॥ अथ दिव्यम्॥

20 तच्च मानुषप्रमाणानिर्णीतार्थनिर्णायकम्। तच्च तत्कालकालान्तरनिर्णायकतया द्वेधा। तत्राद्यभेदानाह बृहस्पतिः। घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमम्। षष्ठं च तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकः॥ दिव्यम्।
अष्टमं फालमित्युक्तं नवमं धर्मजं स्मृतम्। तत्राद्यानि पञ्च महाभियोग एवेत्याह याज्ञवल्क्यः (व्य० श्लो० ९५)। तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।
5 महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥ शीर्षकस्थे पाराजयिकदण्डभाजि॥ पितामहः। सावष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत्। तण्डुलाश्चैव कोशश्च शङ्कितानि योजयेदिति॥ अवष्टम्भो निश्चयः॥ तेन कोशोऽवष्टम्भे शङ्कायां च भवति॥ कालिकापुराणे। परदाराभिशापे च चौर्यागम्यागमेषु च। महापातकशस्ते च स्याद्दिव्यं नृपसाहसे॥ विप्रतिपत्तौ विवादे ऽर्णस्य स्थापने कृते। तत्रैव स्थापये-

---

(१) वी० प० ५४ पृ० २
(२) मि० व्य० प० २९ पृ० २
(३) वी० प० ५० पृ० २
(४) मि० व्य० प० ३१ पृ० २
(५) वी० प० १४ पृ० १
(६) वी० प० ५८ पृ० २
(७) वी० प० ५९ पृ० १.

दिव्यं शिर पूर्वं महीपतिः ॥ परदाराभिशापे च बहवो यत्र वादिनः । शिरोहीनं भवे-
द्दिव्यमात्मनः शुद्धिकारणात् ॥ अगम्याः परदाराभिधाः साधारणा वेश्याद्याः । शस्ते
ऽभिशस्ते । साहसं बलादन्यायः । अवर्णो निन्दा । शिरो दण्डः । परदाररूपं विशेषण-
मविवक्षितं अभिशापस्यानुवादत्वात् । एवं बहव इत्यादापि ॥ तेन वादाभावेऽपि सर्वा-
भिशापे दिव्यं भवति । शुद्धिकारणादिति हेतुनिर्देशोऽप्येवं सङ्गच्छते । विनापि शीर्षकं 5
कुर्यान्नृपद्रोहे ऽथ पातक इति सामान्योक्तिश्च ॥ नारदः । राजभिः शङ्कितानां च
निर्दिष्टानां च दस्युभिः । आत्मशुद्धिपराणां च देयं दिव्यं शिरोविनेति ॥ कालान्तरे
निर्णायकं दिव्यं शपथः ॥ तद्भेदानाह नारदः । सत्यं वाहनशस्त्राणि गोबीजकन-
कानि च । देवतापितृपादाश्च दत्तानि सुकृतानि च ॥ स्पृशेच्छिरांसि पुत्राणां दाराणां
सुहृदां तथा । अभियोगेषु सर्वेषु कोशपानमथापि वा ॥ इत्येते शपथाः प्रोक्ता मनुना 10
स्वल्पकारणात् ॥ कोशस्य कालान्तरनिर्णायकत्वेऽपि महाभियोगविषयतया आद्येषु
पाठः ॥ याज्ञवल्क्यः (व्य० श्लो० ९६) । रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः ॥
अयं च विकल्पोऽभियोक्तुरिच्छायामेव । तदनिच्छायां त्वभियोज्यस्यैव दिव्यम् ॥ न
कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् । अभियुक्ताय दातव्यं दिव्यं दिव्यविशार-
दैरिति दिव्यतत्त्वे कात्यायनीयोक्तेः ॥ 15

अथाधिकारिव्यवस्था । याज्ञवल्क्यः (व्य० श्लो० ९८) । तुला स्त्रीबालवृद्धान्ध-
पङ्गुब्राह्मणरोगिणाम् । अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ स्त्री जातिव-
योवस्थाविशेषानादरेण । षोडशाब्दावधिको बालः सर्वजातीयोऽपि । अशीतिवर्षा-
धिको वृद्धः ॥ अत्र ब्राह्मणस्य वक्ष्यमाणसाधारणकाले तुलैव नियता । अग्न्यादिकाले
तु तान्यपि भवन्ति ॥ अत एव पितामहः । सर्वेषामेव वर्णानां कोशाच्छुद्धिर्विधीयते । 20
सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विना विषमिति ॥ कालिकापुराणे । वर्णान्त्यस्य
सदा देयं माषकं तप्तहेमजम् ॥ नारदः । क्लीबातुरान्सत्त्वहीनान्परितप्तार्दितान्नरान् ।
बालवृद्धातुरान्स्त्रीश्च परीक्षेत धटे सदा ॥ स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं
स्मृतम् । धटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत् ॥ नार्त्तानां तोयशुद्धिः स्यान्न विषं
पित्तरोगिणाम् । श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ॥ न मज्जनीया स्त्री- 25
बाला धर्मशास्त्रविचक्षणैः । रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥ निरु-
त्साहान्व्याधिक्लिष्टांस्तांस्तोये न निमज्जयेत् । सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि
ते स्मृताः ॥ साहसेष्वागतानेतान्नैव तोये निमज्जयेत् । न चापि हारयेदग्निं न
विषेण विशोधयेत् ॥ विष्णुः । न श्लेष्मिणां व्याधितानां भीरूणां श्वासकासिनाम् ॥
कात्यायनः । न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् । मन्त्रयोगविदां चैव 30
विषं दद्यात्तु न क्वचित् ॥ तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणम् ॥ व्रती पयो-
व्रतादिमान् ॥ पितामहः । मद्यपस्त्रीव्यसनिनां कितवानां तथैव च । कोशः प्राज्ञैर्न
दातव्यो ये च नास्तिकवृत्तयः ॥ नारदः । महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।
नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत् ॥ कात्यायनः । अस्पृश्याधमदासानां
म्लेच्छानां पापकारिणाम् । प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥ तत्प्रसिद्धानि 35

दिव्यानि समये तेषु निर्दिशेत् । तन्त्रसिद्धानि धटसर्पादीनि ॥ दिव्यकारिणोऽशक्तौ
प्रतिनिधिमाह दिव्यतन्त्रे स एव ॥ देशकालाविरोधे तु यथायुक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥ अन्येन हारयेत्प्रतिनिधिना कारयेत् । विपर्यये
दिव्यकारिणोऽसामर्थ्ये युक्तं प्रकल्पयेत् । विपर्यये पूर्वं पित्रादिघातो महापापं वा
5 कृतमिति निश्चये ॥ कालान्तरे चार्थान्तरसन्देहेऽपि प्रतिनिधिद्वारैव दिव्यमाह स एव ।
मातापितृद्विजगुरुवृद्धस्त्रीबालघातिनाम् । महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रमदानां च मन्त्रयोगक्रियाविदाम् । वर्णसङ्करजातानां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः । दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायण ॥
एतैरेव नियुक्तानां साधूनां दिव्यमर्हति । न सन्ति साधवो यत्र तत्र शोध्याः स्वकै-
10 र्नरैः ॥ स्वकैरात्मैः ॥

अथ कालः । पितामहः । चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च । एते सा-
धारणा मासा दिव्यानामविरोधिनः ॥ धटः सर्वर्तुकः प्रोक्तो वाते वाते विवर्जयेत् ।
अग्निः शिशिरहेमन्तवर्षासु परिकीर्तित ॥ शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ॥
विषे हेमन्तशिशिरयोरेवोपादानं कालान्तरस्याप्युपलक्षणम् । वर्षे चतुर्यवा मात्रेत्या-
15 दावे वक्ष्यमाणत्वात् ॥ नारद । कोशस्तु सर्वदा देयस्तुला स्यात्सार्वकालिकी ॥
पितामह. । पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च धटो भवेत् । मध्याह्ने तु जलं देयं
धर्मतत्त्वमभीप्सताम् ॥ दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते । रात्रौ तु पश्चिमे
यामे विषं देयं सुशीतलम् ॥ एतानि दिव्यान्यादित्यवारे कार्याणीति शिष्टा ॥

अथ देशः ॥ पितामहः । प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटः सदा ।
20 इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे ॥ नारदः । सभाराजकुलद्वारे देवायत-
नचत्वर इति ॥ कात्यायनः । इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् । नृपद्रो-
हप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥ प्रतिलोमप्रसूतानां दिव्यं देयं चतुष्पथे । अतो-
ऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधा इति ॥ नारदः । अदेशकालदत्तानि बहिर्वा-
दिकृतानि च । व्यभिचारं सदार्थेषु कुर्वन्तीह न संशय इति ॥

25 अथ सर्वदिव्यसाधारणो विधिः । पितामहः । तत आवाहयेद्देवान्विधिनानेन धर्म-
वित् । प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥ एह्येहि भगवन्धर्म अस्मिन्दिव्ये
समाविश । सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥ आवाह्य तु धटे धर्मं पश्चादङ्गानि
विन्यसेत् ॥ स एव । इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा । वरुणं पश्चिमे भागे
कुबेरं चोत्तरे तथा ॥ अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् । इन्द्रः पीतो
30 यमः श्यामो वरुणः स्फटिकप्रभः ॥ कुबेरस्तु सुवर्णाभ अग्निश्चापि सुवर्णभः । तथैव
निर्ऋति. श्यामो वायुर्धूम्रः प्रशस्यते ॥ ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद्बुधः ॥ धरो ध्रुवस्तथा सोम आपश्चैवानिलो ऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ देवेशेशानयोर्मध्य आदित्यानां तथाय-
नम् । धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ॥ इन्द्रो विवस्वान्पूषा च पर्जन्यो
35 दशमस्तथा । ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥ इत्येते द्वादशादित्या

नामभि परिकीर्तिता । अग्रे पश्चिमभागे तु रुद्राणामयन विदु ॥ वीरभद्रश्च शम्भुश्च गिरिशश्च महायशा । अजैकपादहिर्बुध्न्य पिनाकी चापराजित ॥ भुवनाधीश्वरश्चैव कपाली च विशापति । स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृता ॥ प्रेतेशरक्षोमध्ये च मातृस्थान प्रकल्पयेत् । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही चैव माहेन्द्री चामुण्डा गणसयुता । निर्ऋतेरुत्तरे भागे गणेशायतन विदु ॥ 5 वरुणस्योत्तरे भागे मरुता स्थानमुच्यते । गगनस्पर्शनो वायुरनिलो मारुतस्तथा ॥ प्राण प्राणेशजीवौ च मारुता सप्त कीर्तिता । घटस्योत्तरभागे तु दुर्गामावाहयेद्बुध ॥ एतासा देवताना च स्वनाम्ना पूजन विदु । भूषावसान धर्माय दत्त्वा चार्घ्यादिक क्रमात् ॥ अर्घ्यादि पश्चादङ्गाना भूषान्तमुपकल्पयेत् । गन्धादिका निवेद्यान्ता परिचर्या प्रकल्पयेत ॥ चतुर्दिक्षु तथा होम कर्तव्यो वेदपारगै । आज्येन हविषा 10 चैव समिद्भिर्होमसाधनै ॥ सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत । हविश्चरु । आज्यहवि समिधा सम्प्रतिपन्नदेवताकत्वामिलितानामेव होमः ॥ सान्नाय्ययोरेवेति विध्यन्तरे गौडमीमासका सन्न । आज्ये स्रुवेणावद्यतीति स्रुवस्य चरौ सकृदुपस्तृणाति मध्यात्पूर्वार्धाच्च द्विर्हविषोऽवद्यति अभिघारयति हविरवत्त चैषोऽवदानधर्म इत्याश्वलायनादिसूत्रात्स्रुव । समित्सु सामर्थ्यात् हस्तस्येति भिन्नसा 15 धनकत्वात्तन्त्रतानुपपत्ते । सान्नाय्यहोमयोस्तु जुहा एव साधनत्वादुक्ता तन्त्रतेति । स एव । यमर्थमभियुक्त स्यात्लिखित्वा त तु पत्रके । मन्त्रेणानेन सहित तत्कार्यं च शिरोगतम् ॥ मन्त्रश्च । आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदय यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति ॥ नारद । प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारग । श्रुतवृत्तोपसम्पन्न शान्तचित्तो विमत्सर ॥ 20 सत्यसन्ध शुचिर्दक्ष सर्वप्राणिहिते रत । उपोषितश्चार्द्रवासा कृतदन्तानुधावनः ॥ सर्वासा देवताना च पूजा कृत्वा यथाविधीति ॥ याज्ञवल्क्य (व्य० श्लो० ९७) । सचैल स्नातमाहूय सूर्योदय उपोषितम् । कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ पितामहोऽपि । एकरात्रोपोषिताय त्रिरात्रोपोषिताय वा । नित्य देयानि दिव्यानि शुचये चार्द्रवाससे इति ॥ स एव । सद्भि परिवृतो राजा एता शुद्धि प्रपूजयेत् । 25 ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिस्तु तोषयेत् ॥ एव कारयिता राजा भुक्त्वा भोगान्मनोरमान् । महती कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते ॥

---

## ॥ अथ घटविधि ॥

घटविधि ।

पितामह । विशालामुच्छ्रिता शुभ्रा घटशाला तु कारयेत् । यत्रस्थो नोपहन्येत श्वभिश्चाण्डालवायसै ॥ कपाटबीजसयुक्ता परिचारक 30 रक्षिताम् । पानीयादिसमायुक्तामशून्या कारयेन्नृप ॥ नारद । खादिर कारयेत्तत्र निर्व्रण शुष्कवर्जितम् ॥ शुष्कखादिरवर्जितमित्यर्थ ॥ शाशप तदभावे वा शाल च कोटरैर्विना । अर्जुन तिन्दुकीसार तिनिश रक्तचन्दनम् ॥ माधवस्तु

अर्जुनस्तिलकोऽशोकस्तिनिशो रक्तचन्दन इति पपाठ ॥ एवंविधानि काष्ठानि धटार्थं
परिकल्पयेत् ॥ एवंविधानीत्यादीनन्यान्यपि यज्ञियान्योदुम्बरादीनीति मदनः ॥ अत
एव पितामहः । छित्त्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् । प्रणम्य लोकपालेभ्य-
स्तुला कार्या मनीषिभिः ॥ मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च । यूपवत् ओष-
5 धे त्रायस्वैनमित्यादिमन्त्रपूर्वकम् ॥ सौम्यवानस्पत्ययोर्जाप्यमन्त्रत्वेनादृष्टार्थत्वात्समुच्चयः।
सौम्याः प्रसिद्धाः । वानस्पत्यो वनस्पते शतवल्शोवरोहेति ॥ अस्य यूपवदित्यतिदेशा-
त्सिद्धस्यानुवादः ॥ पितामहः । चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव च ॥ व्यासः । हस्तद्वयं निखेयं तु पादयोरु-
भयोरपीति ॥ पितामहः । चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च । कटकानि
10 च देयानि त्रिषु स्थानेषु यत्नतः ॥ स एव । शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ।
प्रागग्रान्कल्पयेद्दर्भाञ्छिक्ययोरुभयोरपि ॥ पश्चिमे तोलयेत्कर्तृनन्यस्मिन्मृत्तिकां शु-
भाम् । इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥ नारदः । शिक्यद्वयं समासज्य
धटकर्कटयोर्दृढम् । एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ॥ धारयेदुत्तरे पार्श्वे
पुरुषं दक्षिणे शिलाम् । पीठकं पूरयेत्तस्मिन्निष्टकापांसुलोष्टकैः ॥ परीक्षाप्रकारमाह स
15 एव । कार्यः परीक्षकैर्नित्यमवलम्बसमो धटः । उदकं च प्रदातव्यं धटस्योपरि
पण्डितैः ॥ यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः ॥ साम्यार्थमवलम्बावाह पितामहः।
तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि । धटादुच्चतरे स्यातां नित्यं दशाभिरङ्गुलैः ॥
अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ । मृन्मयौ सूत्रसम्बद्धौ धटमस्तकचुम्बिनौ ॥
पितामहः । तोलयित्वा नरं पूर्वं तस्मात्तमवतार्य तु । धटं तु कारयेन्नित्यं पताकाध्वज-
20 शोभितम् ॥ तत आवाहयेद्देवान् विधिनानेन मन्त्रवित् । वादित्रतूर्यनिर्घोषैर्गन्धमाल्या-
नुलेपनैः ॥ नारदः । रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः । अर्चयेत्तु धटं पूर्वं
ततः शिष्टांस्तु पूजयेत् ॥ याज्ञवल्क्यः ( व्य० श्लो० १०० ) । तुलाधारणविद्वद्भिरभि-
युक्तस्तुलाश्रितः । प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥ त्वं तुले सत्यधामासि पुरा
देवैर्विनिर्मिता । तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥ यद्यस्मि पापकृन्मात-
25 स्ततो मां त्वमधो नय । शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ नारदः । समयैः परि-
गृह्याथ पुनरारोहयेन्नरम् । निर्वाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् ॥ समयैः परिगृह्य
शपथैर्नियम्य ॥ तानाह विष्णुः । ब्रह्मघ्ने ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ पुनरारोहणकालेऽभिमन्त्रणमाह नारदः ।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च । त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
30 व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वयि । तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥ देवा-
सुरमनुष्याणां सत्यैस्त्वमतिरिच्यसे । सत्यसन्धोऽसि भगवन् शुभाशुभविभावने ॥ आदि
त्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्
धर्मश्च जानाति नरस्य वृत्तमिति ॥ पितामहः । ज्योतिर्विद्ब्राह्मणः श्रेष्ठः कुर्यात्कालप
रीक्षणम् । विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥ साक्षिणो ब्राह्मणश्रेष्ठा यथादृ
35 ष्टार्थवादिनः । ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥ शंसन्ति साक्षिणः स

भुध्यशुद्धी नृपे सदा ॥ विनाड्य पलानि । दशगुर्वक्षर प्राण षट् प्राणा स्याद्विनाडिकेति स्मृते ॥ नारद । तुलितो यदि वर्धेत विशुद्ध स्यान्न सशय । समो वा ही यमानो वा न विशुद्धो भवेन्नर ॥ वृद्धिरूर्ध्वगति । हानिरधोगति ॥ पितामह । अल्पपाप समो ज्ञेयो बहुपापस्तु हीयते ॥ अल्पत्व सकृदमतिकृतत्वेन । यत्र तु शिर स्था पिवचनेनैव सकृदमतिकृतत्वनिश्चय पापमात्रे च विप्रतिपत्त्या तद्दिव्ये कृते समता 5 तत्र दोषाल्पत्वाद्धभवात्पुन करणम् । अत एव बृहस्पति । तत्समस्तु पुनस्तोल्यो वृद्धिगो विजयी भवेदिति ॥ पुन करणे कारणान्तरमाह कात्यायन । शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा । शुद्धेश्च सशये चैन परीक्षेत पुनर्नरम् ॥ व्यास । कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा । रज्जुच्छेदे ऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृप ॥ इद तु दृष्टकारणकभङ्गपरम् । आकस्मिकभङ्गादौ त्वशुद्ध एव । कक्षच्छेदे तुलाभङ्गे 10 धटकर्कटयोस्तथा । रज्जुच्छेदेऽक्षभङ्गे वा तथैवाशुद्धिमादिशेदिति स्मृत्यन्तरात् । कक्ष शिक्यतलम् । अक्ष स्तम्भोपरिस्थापितस्तुलाधार । आवृत्तितोलनमात्रस्य न साङ्गप्रयोगस्येति प्राच्या । एव वैगुण्यापरिहारात्साङ्गप्रयोग आवर्तनीय इति मदन ॥

अथ प्रयोग ॥ कर्ता शुभेऽह्नि पूर्वाह्णे पूर्वोक्तान्यतमवृक्षसमीपे गत्वा ओषधे त्रायस्वेनमिति मन्त्रेण वृक्ष छित्त्वा सोमोधेनु गौतम सोमास्त्रिष्टुप् जपे विनियोग सोमो 15 धेनु० वनस्पते गाथिनो विश्वामित्रो वनस्पतिस्त्रिष्टुप् जपे विनि० वनस्पते शतवल्शो इति जप्त्वा इन्द्रादिलोकपाला प्रत्येक नत्वा चतुर्हस्तदीर्घां चतुरङ्गुलस्थूलां चतुरस्रां मध्येऽन्तयोश्चतुरङ्गुलवृत्तां मध्य उपरिभागे तयोश्चाधोभागे च त्रिभि कर्कटैः कटकैर्वा युतां तुलां कुर्यात् । तत सप्तहस्तां पञ्चहस्तां वा चतुरङ्गुलोन्नतां वेदिं च कुर्यादिति केचित् । ततस्तस्यां शुचिदेशान्तरे वा चतुरस्र षड्ढस्त षड्ढस्ताधि- 20 कोशाकृतचूड स्तम्भद्वय हस्तद्वय भूमौ निखेयम् । भूमेरुपरि हस्तचतुष्टय चूडांशाश्चाधिक स्तम्भान्तर तु हस्तद्वय सार्धहस्त वा । तच्चूडयोर्मध्येऽधोभागे लोहककर्कटकटकवडिशाद्याकारतुलावलम्बनयुत काष्ठ निवेश्यम् । तस्मिंस्तुलास्तोपरितनकर्कटवडिशादिनावलम्बिनीप्रान्तयोश्च फलकद्वय त्रिसृभिस्त्रिसृभीरज्जुभिर्बन्धनीयम् । तुलाया प्राच्यां हस्तद्वयान्तराल दक्षिणोत्तरयो स्तम्भद्वय निखाय तयोरुपर्युत्तराङ्ग 25 काष्ठ दद्यात् । तदेतत्तोरणम् । तच्च धटाद्दशाङ्गुलोच्चम् । एतादृश पश्चिमायामपि कार्यम् । तोरणाभ्यामधोलम्बमानौ मृन्मयौ सूत्रसम्बद्धौ गोलकरूपावलम्बौ तुलाप्रान्तस्पर्शौ कार्यौ साम्यज्ञानाय । फलकयोश्च प्रागग्रान् कुशानास्तृणीयात् । तत कृतैकोपवास शक्तो महाभियोगे कृतोपवासत्रय रविवारे सूर्योदयोत्तरं सचैलस्नात शोध्य कृतैकोपवास प्राड्विवाक पश्चिमे शिक्य आरोप्य पूर्वशिक्ये पाषाणेष्टकामृ- 30 दाद्यारोप्य सम तोलयेत् । तत्परीक्षामुदकप्रक्षेपादिना सत्यवादिनो विप्रा हेमकाराश्च कुर्यु । ततस्तोलनकाले येन सन्निवेशेनोपविष्ट तत्सन्निवेशज्ञानाय तादृशीं रेखां कृत्वा तमवतारयेत् । तत शोध्यो देशकालौ सङ्कीर्त्यामशुद्धिज्ञापनायामुकदिव्यं करिष्य इति सङ्कल्प्य प्राड्विवाकमेक चतुर ऋत्विजश्च वस्त्रादिना वृणुयात् । स्वस्तिवाचनाद्यपि कार्यमिति स्मार्तभट्टाचार्या । प्राड्विवाकश्च प्राञ्जलि सतूर्यना 35

दमोमिह्येहि भगवधर्म अस्मिदिव्ये सभाविश । सहितो लोकपालैश्च वस्वादित्यम
रुद्रणैरिति । एव घटे धर्ममावाह्य पश्चादिन्द्रदेवता आवाहयेत ॥ ओमिन्द्राविश्वा मधु
च्छन्दस इन्द्रोनुष्टुप् इन्द्रावाहने वि० एव सर्वत्र विनियोग । इन्द्रविश्वा० इन्द्र इहागच्छेह
तिष्ठेति पूर्वे इन्द्रमावाह्य पीत ध्यायेत् । यमाय सोमयमोयमोनुष्टुप् यमायसोम० यम
5 इहागच्छेहतिष्ठेति दक्षिणे यममावाह्य श्याम ध्यायेत् । तत्त्वो वामदेवो वरुणस्त्रिष्टुप्
तत्त्वोऽमेरुणस्य० वरुणेहाऽगच्छेह तिष्ठेति पश्चिमे वरुणमावाह्य स्फटिकाभ ध्यायेत् ।
राजाधिराजायेति यजुषा कुबेर इहागच्छेह तिष्ठेति उत्तरे कुबेरमावाह्य सुवर्णवर्णं
ध्यायेत् । अग्निं मेधातिथिरग्निर्गायत्री ओमग्निं दूत० अग्ने इहागच्छेह तिष्ठेति आग्नेये
अग्निमावाह्य सुवर्णवर्णं ध्यायेत । मोषुणो घोर कण्वो निर्ऋतिर्गायत्री मोषुण ० इहेत्या
10 द्यावाह्य श्याम ध्यायेत् ॥ तव वायोव्यश्वो वायुर्गायत्री तववाय० इहेति पूर्ववत् धूम्र
ध्यायेत् ॥ तमीशान गौतम ईशानो जगती तमीशानमिहेत्यावाह्य रक्त ध्यायेत् ॥
इन्द्रादक्षिणत ऽमयाअत्रवसवो मैत्रावरुणो वसिष्ठो वसवस्त्रिष्टुप् ऽमयाअत्रवसव०
इहागच्छतेहतिष्ठतेत्यष्टौ वसून् ॥ धरो ध्रुवस्तया सोम आपश्चैवानिलोऽनल । प्रत्यू
षश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिता ॥ इन्द्रेशानयोर्मध्ये त्यान्नुसामदोमत्स्यो द्वाद
15 शादित्या गायत्री त्यान्नुक्षत्रियानित्यादि द्वादशादित्यानावाह्य । धातार्यमा च मित्रश्च
वरुणोंऽशो भगस्तथा । इन्द्रो विवस्वा पूषा च पर्जन्यो दशमस्तथा ॥ ततस्त्वष्टा ततो
विष्णुरजघन्यो जघयज । इत्येते द्वादशादित्या नामभि परिकीर्तिता ॥ अग्ने पश्चिमे
आरुद्रास श्यावाश्व एकादशरुद्रा जगती आरुद्रास० इहेति रुद्रानावाह्य ॥ वीरभ
द्रश्च शम्भुश्च गिरिशश्च महायशा । अजैकपादहिर्बुध्न्य पिनाकी चापराजित ॥ भुव
20 नाधीश्वरश्चैव कपाली च विशापति । स्थाणुर्भवश्च भगवान् रुद्रा एकादश स्मृता ॥
यमनिर्ऋतिमध्ये ब्रह्मजज्ञान गोतमो वामदेवो ब्रह्मा त्रिष्टुप ब्रह्मजज्ञान० इहेत्या
दिब्रह्माणमावाह्य ॥ गौरीमिमायेत्यस्य दार्घतमा उमा जगती गौरीमिमाय० मातर
इहागच्छतेह तिष्ठतेति मातृरावाह्य ॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्तमातर ॥ निर्ऋतेरुत्तरतो गणानां त्वा गृत्समदो
25 गणाधिपतिर्जगती गणाना त्वा० इहेत्यादि गणेश ॥ वरुणादुत्तरे मरुतो यस्य रा
हूगणो मरुतो गायत्री मरुतो यस्य० इहेत्यादि मरुत ॥ गगनस्पर्शनो वायुरनिलो
मारुतस्तथा । प्राण प्राणेशजीवौ च मरुत सप्त कीर्तिता ॥ घटादुत्तरे जातवेदसे
कश्यपो दुर्गा त्रिष्टुप् जातवेदसे० इहेति दुर्गाम् ॥ एवमेता देवता आवाह्य
पूजयेत् । धमायार्घ्यं प्रकल्पयामि नम इत्यादिप्रयोगेणार्घ्यपाद्याचमनीयमधुपर्का
30 चमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटकादिभूषान्त धर्माय दत्वा इन्द्रादीना
प्रणवाद्यै स्वस्वनामभिश्चतुर्थ्यन्तैरर्घ्यादिभूषणान्त पदार्थानुसमयेन दत्वा धर्माय गन्ध
पुष्पधूपदीपनैवेद्यानि दध्यपूपाक्षतादि च दत्त्वा इन्द्रादीनां गन्धादीनि पूर्ववद्दद्यात् ॥
गन्धपुष्पादीनि च घटे धर्मपूजाया चरितार्थानि कार्याणि । इन्द्रादीना यथालाभम् ।
एतदन्त प्राड्विवाक कुर्यात् । ततश्चतुर्भिर्ऋत्विग्भिश्चतसृषु दिक्षु लौकिकाग्नि
35 स्थापनादिपूर्व होम कार्य । तत्र सप्रणवा गायत्रीमुच्चार्य पुन स्वाहाकारान्त प्रणव

मुद्धार्थं आज्यचरुसमिध प्रत्येकमष्टोत्तरशत सवित्रे जुहुयु । ततोऽभियुक्तमर्थं पत्रे लिखेदभियुक्त । आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदय यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति मन्त्र च लिखेत् ॥ तत्र पत्र सशोध्याभियुक्तशिरोगत कुर्यात । इद च धर्मावाहनादि शिर पत्रदानान्तं सर्वदिव्यसाधारणम् ॥ तत प्राड्विवाको धटमभिमन्त्रयेत् । त्व धट ब्रह्मणा सृष्ट परीक्षार्थं दुरात्मनाम् । धकारद्धर्ममूर्तस्त्व टकारात्कुटिल नरम् ॥ धृतो भावयसे यस्माद्धटस्तेनाऽभिधीयसे । त्व वेत्सि सर्वभूताना पापानि सुकृतानि च ॥ त्वमेव सर्वं जानीषे न विदुर्यानि मानवा । व्यवहाराभिशस्तोऽय मानुष शुद्धिमिच्छति ॥ तदेन सशयादस्माद्धर्मतस्त्रातुमर्हसीति मन्त्रेण । ततोऽभियुक्त त्व तुले सत्यधामासि पुरा देवैर्विनिर्मिता । तत्सत्य वद कल्याणि सशयान्मा विमोचय ॥ यद्यह पापकृन्मातस्ततो मा त्वमधो नय । शुद्धश्चेद्गमयोर्ध्वं मा तुलामित्यभिमन्त्रयेत् ॥ तत प्राड्विवाक शिरोगतपत्रकमभियुक्त यथास्थान यथासन्निवेश च धटमारोप्य पञ्चपलकं तथैव तत्र स्थापयेत ॥ तस्मिश्च काले शुद्ध्यशुद्धी परीक्ष्य शुचिभिर्ब्राह्मणै राज्ञे सभ्येभ्यश्च निवेदनीये इति ॥ ततस्ततोऽवतीर्य प्राड्विवाकब्राह्मणर्त्विजो यथाविभव दक्षिणाभिस्तोषयेत् । ततो देवता उत्तिष्ठ ब्रह्मणस्पते० यान्तु देवगणा इति० विसृज्य सर्वं प्राड्विवाकाय समर्पयेत् ॥

---

## ॥ अथाग्निविधि ॥

**पितामह** । अग्नेर्विधि प्रवक्ष्यामि यथावच्छास्त्रचोदितम । कारयेन्मण्डलान्यष्टौ पुरस्तान्नवम तथा ॥ आग्नेय मण्डल चाद्य द्वितीय वारुण तथा ॥ तृतीय वायुदैवत्य चतुर्थं यमदैवतम ॥ पञ्चम त्विन्द्र-

अग्निविधि ।

दैवत्य षष्ठ कौबेरमुच्यते । सप्तम सोमदैवत्य सावित्र त्वष्टम तथा ॥ नवम सर्वदैवत्यमिति वेदविदो विदु । मदनस्तु अष्टम सर्वदैवतम । पुरस्तान्नवम यत्तु तन्महत्पार्थिव विदु ॥ गोमयेन कृतानि स्युरद्भि पर्युक्षितानि च इति पपाठ ॥ मण्डलाना परिमाणमाह स एव । द्वात्रिंशदङ्गुल प्राहुर्मण्डलान्मण्डलान्तरम ॥ अष्टभिर्मण्डलैरेवमङ्गुलाना शतद्वयम् । षट्पञ्चाशत्समाधिक भूमेस्तु परिकल्पना ॥ मण्डलान्मण्डलादि । मण्डलभुवोऽन्तरालभुवश्च मिलिता द्वात्रिंशदङ्गुलानीत्यर्थः ॥ तत्र षोडशाङ्गुल मण्डल मण्डलयोरन्तराल च तावदेव । षोडशाङ्गुलक ज्ञेय मण्डल तावदन्तरमिति याज्ञवल्क्योक्ते (व्य० श्लो० १०९) । यदि शोध्यपद षोडशाङ्गुलाधिक तदान्तराल षोडशाङ्गुलन्यूनमेव भवति । यदि शोध्यपद षोडशाङ्गुलादल्प तदा षोडशाङ्गुलमण्डलमध्ये पदपरिमाणमवान्तरमण्डल कार्यम् ॥ यत्तु नारद एव शतद्वयमित्यस्याग्रे चत्वारिंशत्समाधिक भूमेरङ्गुलमानत इति पपाठ तदष्टमनवममण्डलान्तरालभूभाग विहाय योज्य तस्य गमनानर्हत्वात ॥ एव चतुर्विंशतिरा स्यात्ता भूमेस्तु परिकल्पनेति कल्पतरूक्ते पाठेऽप्याद्यमवस्थितमण्डल विहायाङ्गुलं

परिमाण योज्यम् ॥ मण्डले मण्डले देया कुशाः शास्त्रप्रचोदिताः । विन्यसेच्च पदं तेषु कर्ता नित्यमिति स्थितिः ॥ मिताक्षरायां मदनरत्ने च शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम् ॥ अयं च होमोऽग्नये पावकाय स्वाहेति मन्त्रेण कार्य इति विज्ञानेश्वरः ॥ नारदः । जातैव लोहकारो यः कुशलश्चाग्निकर्मणि । दृष्टप्रयोगश्चाप्यत्र तेनायोऽग्नौ प्रतापयेत् ॥ अग्निवर्णमयः पिण्डं सस्फुलिङ्गं सुरक्षितम् ॥ पितामहः । अस्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम् ॥ पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम् ॥ कालिकापुराणे । शतार्धपलिकं वृत्तं द्वादशाङ्गुलमायतम् । लौहमग्निमयं तमात देयं राज्ञाऽभिशापिने ॥ शङ्खलिखितौ तु पिण्डस्य षोडशपलत्वमाहतुः । अथवा सप्ताश्वत्थपत्रान्तरितं षोडशपलमग्निवर्णं पिण्डमञ्जलिनादायेत्यादि ॥ एतच्चाशक्तौ । तृतीयतापे तप्यन्तमिति नारदोक्तेस्त्रिवारं पिण्डं सन्ताप्य । तत्र सन्ताप्य जले क्षिप्त्वा पुनः सन्ताप्य जले क्षिप्त्वा पुनस्ताप्ययाने प्राड्विवाको धर्मावाहनादिशिरःपत्रारोपणान्तं कुर्यात् ॥ तत्र वह्निपूजायां विशेषमाह पितामहः । तत्र पूजा हुताशस्य कार्येन्मनुजाधिप । रक्तचन्दनधूपाभ्यां रक्तपुष्पैस्तथैव च ॥ हारीतः । प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः । आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम् ॥ शोध्य इति शेषः । पितामहः । प्रथमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिः ॥ नारदः । हस्तक्षतेषु सर्वेषु कुर्याद्रक्तपदानि तु ॥ तान्येव पुनरालक्षेद्धस्तौ बिन्दुविचित्रितौ ॥ याज्ञवल्क्यः (व्य० श्लो० १०३) । करौ विमृदितव्रीहेरङ्कयित्वा ततो न्यसेत् ॥ सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ तावदिति क्रियाविशेषणम् । तेन सप्तवारं वेष्टयेदिति विज्ञानेश्वरः ॥ तावतां सूत्राणां समाहारस्तावत्सूत्रं तेन सप्तसूत्र्या सकृद्वेष्टयेदित्यर्थ इति मदनः ॥ पितामहः । सप्त पिप्पलपत्राणि अक्षतान्सुमनोदधि । हस्तयोर्निक्षिपेत्तत्र सूत्रेण वेष्टनं तथा ॥ अत्र प्राड्विवाकस्य पिण्डस्याग्न्यभिमन्त्रणमन्त्राः प्रयोगे वक्ष्यन्ते ॥ याज्ञवल्क्यः (व्य० श्लो० १०४) । त्वमग्ने सर्वभूतानामन्तश्चरसि पावक । साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥ तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम् । अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥ पितामहः । ततस्तं समुपादाय राजा धर्मपरायणः । सन्दंशेन नियुक्तो वा हस्तयोस्तस्य निक्षिपेत् ॥ नारदः । हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः । स्थित्वैकस्मिंस्ततोऽन्यानि व्रजेत्सप्त त्वजिह्मगः ॥ पितामहः । त्वरमाणो न गच्छेत्तु स्वस्थो गच्छेच्छनैः शनैः । न मण्डलान्यतिक्रामेन्नान्तरा स्थापयेत्पदम् ॥ अष्टमं मण्डलं कृत्वा नवमे निक्षिपेद्बुध इति ॥ पिण्डस्तु सतृणे नवममण्डले निक्षेप्यः ॥ मण्डलानि तथा सप्त षोडशाङ्गुलमानतः । तावदन्तरतो गच्छेद्धृत्वा नवतृणे क्षिपेदिति कालिकापुराणात् ॥ पितामहः । ततस्तद्धस्तयोः प्रास्येद्व्रीहीन्वा यदि वा यवान् । निर्विशङ्केन तेषां हस्ताभ्यां मर्दने कृते ॥ निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ॥ कात्यायनः । प्रस्खलन्नभियुक्तश्चेत्स्थानादन्यत्र दह्यते । न तद्दग्धं विदुर्दे-

(१) व्य० प० ४३ प० १ (२) मि० व्य० प ४० पृ० १
(३) व्य० प० ४० प० २

र्वास्तस्य भूयोऽपि दापयेत् ॥ याज्ञवल्क्य (व्य० श्लो० १०७)। अन्तरापतिते
पिण्डे सन्देहे वा पुनर्हरेत् ॥

अथ प्रयोग ॥ पूर्वेद्युर्भूशुद्धिं विधाय परेद्युर्नव मण्डलानि कार्याणि ॥ तत्राद्य षोड
शाङ्गुल विधायाग्रे द्वात्रिंशदङ्गुल भूभाग द्विधा विभज्य द्वितीयभागे गन्तृपदप्रमाण
द्वितीय मण्डल कार्यम् ॥ अवशिष्टमन्तराल भवति एवमेव तृतीयाद्यष्टमपर्यन्तमन्त- 5
रालसहित निर्वर्त्याग्रे षोडशाङ्गुलमन्तराल मुक्त्वा नवममपरिमिताङ्गुलप्रमाण का
र्यम् ॥ तथाचाष्टाना मण्डलानामन्तराल च मिलित्वाङ्गुलाना षट्पञ्चाशदधिक श-
तद्वय सपद्यते ॥ तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रय । प्रमाणमङ्गुलस्योक्त वित
स्तिर्द्वादशाङ्गुल ॥ हस्तो वितस्तिद्वितय दण्डो हस्तचतुष्टयम् । तत्सहस्रद्वय क्रोशो
योजन तच्चतुष्टयम् ॥ वितस्त्याद्युत्तरत्रोपयोक्ष्यते ॥ तत पश्चिमादिषु नवसु मण्डले- 10
ष्वधिदेवता क्रमेणाग्निं वरुण वायु यममिन्द्र कुबेर सोम सवितार सर्वदेवताश्च सम्पू
ज्य मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधायाग्नये पावकाय स्वाहेत्याज्ये
नाष्टोत्तरशत जुहुया प्राड्विवाक शान्त्यर्थम् ॥ ततस्तस्मिन्नग्नावश्रिरहित वृत्त श्लक्ष्ण-
मष्टाङ्गुलायाम पञ्चाशत्पलसम्मितमय पिण्ड प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादि
हवनान्त धटविध्युक्तमनुष्ठानकाण्ड कृत्वा तृतीये तापे वर्तमानेऽय पिण्डस्यमग्निमभि 15
मन्त्रयेदेभिर्मन्त्रै प्राड्विवाक ॥ त्वमग्ने वेदाश्चत्वारस्त्व च यज्ञेषु हूयसे । त्व मुख सर्व
देवाना त्व मुख ब्रह्मवादिनाम् ॥ जठरस्थो हि भूताना ततो वेत्सि शुभाशुभम् ।
पाप पुनासि वै यस्मात्तस्मात्पावक उच्यसे ॥ पापेषु दर्शयात्मानमर्चिष्मान्भव पावक ।
अथवा शुद्धभावेषु शुद्धो भव हुताशन ॥ त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् । त्वमेव
देव जानीषे न विदुर्यानि मानवा ॥ व्यवहाराभिशस्तोऽय मानुष शुद्धिमिच्छति । तदेन 20
सशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ लोहशुद्ध्यर्थं सुतप्त लोहपिण्डमुदके निक्षिप्य पुन
सन्ताप्योदके निक्षिप्य पुन सन्तापन तृतीयताप । एवमभिमन्त्रित सुतप्तमग्निवर्णम
य पिण्ड सन्दशेन गृहीत्वा प्राड्विवाक उपोषितस्य स्नातस्यार्द्रवासस शिरोबद्धप्र-
तिज्ञापत्रस्य पश्चिमे मण्डले तिष्ठतो दिव्यकर्तु पुरत आनीय त्वमग्ने सर्वभूताना
मन्तश्चरसि पावक । साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्य कवे ममेति दिव्यकर्त्राभिमन्त्रित 25
तस्य कृतसस्कारयोर्हस्तयोर्निक्षिपेत् ॥ कृतसस्कारयोर्व्रीहीन्मर्दयित्वाञ्जलीकृतयोस्ति
लकालकव्रणकिणादिस्थानेष्वलक्त करसादिनाङ्कयित्वा सप्त समान्यश्वत्थस्य पत्राणि
अलाभेऽर्कपत्राणि सप्त शमीपत्राणि सप्त वा दूर्वापत्राणि अक्षतान्दध्यक्ताक्षतान्पुष्पाणि
च विन्यस्य सप्तभि शुक्लसूत्रै सप्तकृत्वो वेष्टितयोस्ततो दिव्यकर्ता द्वितीयादीन्यष्टमान्ता
नि मण्डलानि तेष्वेव पद निक्षिपन् सप्त पदानि शनैर्गत्वाञ्जलिस्थमय पिण्ड नवमे 30
निक्षिपेत ॥ तत पुन कराभ्या व्रीहीन सङ्घृष्यादग्धहस्तश्चेच्छुद्धो भवति ॥

## ॥ अथ जलविधि ॥

**पितामह** । तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम् । मण्डलं धूपदीपाभ्यां कारयेत विचक्षण ॥ शरान्संपूजयेद्धन्वा वैणवं च धनुस्तथा । मङ्गलैः पुष्पधूपैश्च ततः कर्म समाचरेत् ॥ धूपदीपाभ्यां श

जलविधि ।

5 रान्संपूजयेदित्यन्वयः । पूजा च मण्डले कार्या ॥ धनुःपरिमाणमाह **नारद** । क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् । मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥ मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् । हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः ॥ सप्तशतं सप्ताधिकशताङ्गुलम् । एवं षट्शतं पञ्चशतं च ॥ **कात्यायन** । शराश्चानायसाग्राश्च प्रकुर्वीत विशुद्धये । वेणुकाण्डमयांश्चैव क्षेप्ता तु

10 सुदृढं क्षिपेत् ॥ **नारद** । गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम् । कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ ॥ गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः । वरुणाय प्रकुर्वीत पूजामादौ समाहितः ॥ ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः । नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद्बली ॥ **पितामह** । स्थापयेत्प्रथमं तोये स्तम्भवत्पुरुषं नृपः । आगतं प्राङ्मुखं कृत्वा तोयमध्येऽनुकारिणम् ॥ ततस्त्वावाहयेद्देवान्सलिलं चा

15 नुमन्त्रयेत् ॥ देवान्धर्मादीन् ॥ धर्मावाहनादि शिरःपत्रारोपणान्तं कुर्यादित्याद्यनुमन्त्रणमन्त्राः प्रयोगे द्रष्टव्याः ॥ **व्यास** । सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम् । नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥ कमुदकमभिशाप्याभिमन्त्र्येत्यर्थः ॥ **बृहस्पति** ॥ अप्सु प्रवेश्य पुरुषं प्रक्षिपेत्सायकत्रयम् ॥ **पितामह** । क्षेप्ता तु क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽपि वा । अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥ **कात्या**

20 **यन** । क्षिप्तेषु मज्जनं कार्यं गमनं समकालिकम् ॥ मज्जनसमकालिकमित्यर्थः ॥ **नारदपितामहौ** । शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः । गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥ मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः । प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥ आगतस्तु शरग्राही न पश्यति तथा जले । अन्तर्जलगतं सम्यक्तदा शुद्धं विनिर्दिशेत् ॥ अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।

25 स्थानाद्वान्यत्रगमनाद्यस्मिन्पूर्वं निवेशितः ॥ एकाङ्गस्येति कर्णपरम् ॥ तथा च **कात्यायन** । शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका । अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥ **पितामह** । शरस्य पतनं ग्राह्यं सर्पणं परिवर्जयेत् ॥ **नारद** । पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे । तौ च तत्र नियोक्तव्यौ शरानयनकारणात् ॥

30 अथ प्रयोगः ॥ जलस्थानं नदीसागरहृददेवखातसरस्तडागादि स्थिरतोयं योग्यम् ॥ अल्पमाहार्यंतृणशैवालोर्मिपङ्कग्राहजलौकामत्स्यादियुक्तं शीघ्रवेगमित्यादि वर्ज्यम् ॥ तत्र नाभिदघ्ने जले यज्ञियवृक्षोद्भवा धर्मस्थूणा कार्या ॥ तत्सन्निधौ पश्चिमतीरदेशे शोष्पकर्णोच्छ्रितं तोरणं कार्यम् ॥ तत्समीपे षडुत्तरशताङ्गुलं वैणवं धनुरनायसाग्रा वैणवास्त्रयः शराश्च स्थाप्याः ॥ तोरणात्सार्धशतहस्तमिते सुदेशे लक्ष्यं स्थाप्यम् ॥

ततः सशरं धनु श्वेतगन्धमाल्यादिभि सम्पूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मावाहनादि हवनान्तं पूर्वोक्तं निर्वर्त्य शोध्यशिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाको जलमभिमन्त्रयेदेवम् । तोय त्व प्राणिना प्राणः सृष्टेराद्य तु निर्मितम् । शुद्धेश्च कारणं प्रोक्त द्रव्याणा देहिना तथा ॥ अतस्त्व दर्शयात्मान शुभाशुभपरीक्षण इति ॥ तत शोध्योऽपि सत्येन माभिरक्ष त्व वरुणेत्यभिमन्त्रयेत् ॥ ततोऽवष्टब्धधर्मस्थूणस्य 5 प्राङ्मुखस्य नाभिदघ्नोदकावस्थितस्य बलीयस पुरुषस्य समीप गच्छेच्छोध्य ॥ ततो धनु स्थानात् क्षत्रियस्तद्वृत्तिर्ब्राह्मणो वाऽन्यायसाग्रांस्त्रीन् शरान् लक्ष्यंप्रति सुदृढ प्रक्षिपेत् ॥ तत एकस्मिञ्जविनि पुरुषे मध्यम शरं गृहीत्वा तस्य प्रसर्पणस्थान विहाय पतनस्थाने स्थितेऽन्येन जविना शरमोक्षस्थाने तोरणमूले स्थातव्यम् ॥ जवी च पञ्चाशतो धावकाना मध्ये जवाधिक ॥ ततस्तोरणमूलस्थितेन प्राड्विवाकेन करता- 10 लिकात्रये दत्ते तृतीयकरतालिकासमकालमेव शोध्यतोरणमूलस्थजविभ्या मज्जनद्रुततरगमने कार्ये । मज्जन चावष्टब्धधर्मस्थूणस्योरू गृहीत्वा कार्यम । ततस्तस्मिन्म ध्यमशरपातस्थान गते तत्र स्थित शरग्राही द्रुततर तोरण गत्वा जलान्तर्गत शोध्य यदा पश्यति तदासौ शुद्ध । शिरोमात्रदर्शनेऽपि शुद्धो न कर्णाद्यङ्गान्तरदर्शने निमज्जनस्थानादन्यत्रगते वा ॥ 15

---

## ॥ अथ विषविधि ॥

तत्र नारद । दद्याद्विष सोपवासो देवब्राह्मणसन्निधौ । धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥ द्विजाना सन्निधावेव दक्षिणाभिमुखे स्थिते । उदङ्मुख प्राङ्मुखो वा दद्याद्विष समाहित ॥ तत्परिमाणमाह

विषविधि ।

स एव । वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता । हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि 20 हि ॥ अल्पा त्रियवा । हेमन्त शिशिरस्याप्युपलक्षक तयो समासश्रुते ॥ वसन्तस्तु सर्वदिव्यसाधारण्येन प्राप्त एव ॥ तत्रापि सप्तयवा मात्रेति विज्ञानेश्वरे ॥ विष च त्रिंशद्गुणघृतयुत देयम । पूर्वाह्ने शीतले देशे विष देय तु देहिनाम् । घृतेन योजित सम्यक्पिष्ट त्रिंशद्गुणान्वितमिति कात्यायनोक्ते ॥ विषाभिमन्त्रणमाह याज्ञवल्क्य (व्य० श्लो० ११०) । विष त्व ब्रह्मण पुत्र सत्यधर्मे व्यवस्थित । त्रायस्वास्मादभी- 25 शापात्सत्येन भव मेऽमृतम् ॥ नारद । छायाविनिर्गतो रक्ष्यो दिनशेषमभोजन । विषवेगक्रमातीत शुद्धोऽसौ मनुरब्रवीत् ॥ विषपरिमाणबाहुल्ये तु अवध्यन्तरमाह स एव । पञ्चतालशत काल निर्विकारो भवेद्यदा । तदा भवति सशुद्धस्तत कुर्याच्चिकित्सितामिति ॥ विषवेगाश्च विषतन्त्रे । वेगो रोमाञ्चमाद्यो रचयति विषज स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । यो वेग पञ्चमोऽसौ 30 नयनविवशतां कण्ठभङ्ग च हिक्का षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥ अत्र सोपवासेन प्राड्विवाकेन महादेवाग्रे विष सस्थापित भक्षयेदिति ॥

---

(१) मि० व्य० प० ४४ प० १

## ॥ अथ कोशविधिः ॥

पितामहः । भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् । समभावे तु देवाना-
कोशविधिः । मादित्यस्य तु पाययेत् ॥ दुर्गायाः पाययेच्चौरान् ये च शस्त्रो-
पजीविनः । भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत् ॥ बृह
5 स्पतिः । यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् । प्रक्षाल्य पाययेत्तस्माज्जलात्तु
प्रसृतित्रयम् ॥ नारदः । तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् । आदित्याभिमुखं
कृत्वा पाययेत्प्रसृतित्रयम् ॥ पूर्वोक्तेन विधानेन स्नातमार्द्राम्बरं शुचिम् ॥ नारदः ।
अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु । एनश्च श्रावयित्वा तु पाययेत्प्रसृतित्रयम् ॥
अत्र सोपवासः प्राड्विवाकः पूर्वाह्णे देवमभ्यर्च्य तत्स्नानोदकं गृहीत्वा धर्मावाहनादि
10 शिरःपत्रारोपणान्तं कृत्वा जलदिव्योक्तमन्त्रेण तज्जलमभिमन्त्रयेत । शोध्योऽपि तदु-
क्तेनैवाभिमन्त्र्य भक्षयेदिति ॥ बृहस्पतिः । सप्ताहाद्वा द्विसप्ताहाद्यस्यार्तिर्न प्रदृश्यते ॥
पुत्रदारधनानां च स शुद्धः स्यान्न संशयः ॥

---

## ॥ अथ तण्डुलविधिः ॥

तत्र पितामहः । तण्डुलानां प्रवक्ष्यामि विधिं लक्षणबोधितम् । चौर्ये तु तण्डु-
15 तण्डुलविधिः । ला देया नान्यत्रेति विनिश्चयः ॥ तण्डुलान्कारयेच्छुक्लाञ्शा
लेर्नान्यस्य कस्यचित् । मृन्मये भाजने कृत्वा आदित्यस्याग्रतः
शुचि ॥ स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् । आवाहनादि पूर्वं तु कृत्वा
रात्रौ विधानतः ॥ कात्यायनोऽपि । देवतास्नानपानीयदिव्यतण्डुलभक्षणे । शुद्ध
निष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा ॥ पितामहः । शोणितं दृश्यते यस्य हनु-
20 स्तालु च शीर्यते । गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

---

## ॥ अथ तप्तमाषविधिः ॥

पितामहः । तप्तमाषस्य वक्ष्यामि विधिमुद्धारणे शुभम् । कारयेदायसं पात्रं
ताम्रं वा षोडशाङ्गुलम् ॥ चतुरङ्गुलखातं तु मृन्मयं वापि
तप्तमाषविधिः । मण्डलम् । पूरयेद्घृततैलाभ्यां विंशत्या च पलैस्तु तत् ॥
25 सुवर्णमाषकं तस्मिन्सुतप्ते निक्षिपेत्ततः । अङ्गुष्ठाङ्गुलियोगेन तप्तमाषकमुद्धरेत् ॥
कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते । शुद्धो भवति धर्मेण निर्विकारकरा-
ङ्गुलिः ॥ प्रकारान्तरमाह स एव । सौवर्णे राजते ताम्रे आयसे मृन्मयेऽपि वा ॥ गव्यं
घृतमुपादाय तदग्नौ तापयेच्छुचिः । सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोभिताम् ॥
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् । भ्रमद्वीचितरङ्गाढ्ये अनखस्पर्शगोचरे ॥
30 परीक्षेतार्द्रपर्णेन चुरुकारं सुघोषकम् । ततश्चानेन मन्त्रेण सकृत्तमभिमन्त्रयेत् ॥ पर

पवित्रममृतं घृत त्व यज्ञकर्मणि । दह पावक पापं त्व हिमशीतं शुचौ भव ॥ उपोषित तत स्नातमार्द्रवासससमागतम् । ग्राहयेन्मुद्रिका ता तु घृतमध्यगता तथा ॥ प्रदेशिनी च तस्याथ परीक्षेयु. परीक्षका । यस्य विस्फोटका न स्यु. शुद्धोऽसावन्यथाऽशुचि ॥

## ॥ अथ फालविधिः ॥

बृहस्पति । आयस द्वादशपलं घटित फालमुच्यते । अष्टाङ्गुल भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥ अग्निवर्णं तु तच्चौरो जिह्वया लेलिहेत्सकृत् । न दग्धश्चेच्छुद्धिमीयादन्यथा तु स हीयते ॥

फालविधि ।

## ॥ अथ धर्मजविधिः ॥

पितामहः । अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् । हन्तृणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥ राजतं कारयेद्धर्ममधर्मं सीसकायसम् । लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ ॥ अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् । सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् ॥ एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् । गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः ॥ मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ । उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ ॥ आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् । धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ॥ यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे । अभियुक्तस्तयोश्चैकं प्रगृह्णीतावि लम्बितम् ॥ धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते । एवं समासत प्रोक्तं धर्माधर्मपरीक्षणम् ॥ बृहस्पति. । पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ । जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभि ॥ आमन्त्र्य पूजयेद्गन्धै कुसुमैश्च सितासितै । अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ तत ॥ समौ कृत्वा तु कुम्भे तौ स्थाप्यौ चानुपलक्षितौ । तत कुम्भात्पिण्डमेकं प्रगृह्णीताविलम्बितम् ॥ धर्मे गृहीते शुद्ध स्यात्सम्पूज्यश्च परीक्षकैः ॥

धर्मजविधि ।

अथ प्रयोग ॥ पत्रद्वये शुक्लं धर्मं कृष्णमधर्मं पुत्तलकरूपं विधाय आह्रींक्रोंहंयंरंलंवंशंषंसहंसोऽहं धर्मस्य प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इत्यनेन जीवदानं धर्मप्रतिमायाः कृत्वा गायत्र्यादिसामज्ञा पुनरपीमं मन्त्रं पठित्वा धर्मस्य जीव इह स्थित पुनरपि तमेव पठित्वा धर्मस्य सर्वेन्द्रियाणि वाङ्मनोनेत्रश्रोत्रघ्राणप्राणा इहागच्छतेह तिष्ठत स्वाहा इत्यनेनैव जीवदानं धर्मप्रतिमायां कृत्वा गायत्र्यादिसामज्ञाने तेनैव नोचेत्सव्याहृतिप्रणवां गायत्रीं पठित्वा आवाहनादि कृत्वा यथाक्रमं शुक्लकृष्णपुष्पाभ्यां धर्माधर्मौ सम्पूज्य प्रणवेन पञ्चगव्यमादायाभ्युक्ष्य शुक्लपुष्पयुक्तं धर्मं कृष्णपुष्पयुक्तमधर्मं मृत्पिण्डद्वये कृत्वा नवे कुम्भे स्थापयेत् ॥ प्राड्-

याकस्ततो धर्माबाहनादिरचनान्तं कर्म कृत्वा समन्वकप्रतिज्ञापत्रं संशोध्य शिरसि बध्नीयात् ॥ शोध्यस्तु यदि पापविशुद्धोऽहं धर्मस्त्वायातु मे करे इत्युच्चार्य कुम्भान्तर्योरेकं गृह्णीयात् ॥ धर्मे गृहीते शुद्ध इति । ततो दक्षिणां दद्यात् ॥

---

## ॥ अथ शपथाः ॥

5　मनुः (अ० ८ श्लो० ११३) । सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ बृहस्पतिः । सत्यं शपथाः । वाहनशस्त्राणि गोबीजकनकानि च । देवब्राह्मणपादाश्च पुत्रदारशिरांसि च ॥ एते च शपथा. प्रोक्ताः स्वल्पेऽर्थे सुकराः सदा । साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम् ॥ याज्ञवल्क्यः (अ० श्लो० ११३) । अर्वाक् च-

10 तुर्दशादह्नो यस्य नो राजदैविकम् । व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ घोरं महत् । स्वल्पस्य देहिनामपरिहार्यत्वादिति मिताक्षरायाम् ॥ कात्यायनोऽपि । आचतुर्दशकादह्नो यस्य नो राजदैविकम् । व्यसनं जायते घोरं स ज्ञेयः शपथैः शुचि. ॥ व्यसनमापत्. घोरमतिपीडाकरम् स्वल्पस्य शरीरधर्मत्वादिति **वाचस्पतिमिश्रस्मार्तभट्टाचार्यौ** ॥ पुन कात्यायनः । अथ दैवविसंवादे त्रिसप्ताहात्तु

15 दापयेत् । अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च ॥ तस्यैकस्य न सर्वस्य जनस्य. यदि तद्भवेत् । रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥ ज्वरातिसारविस्फोटगूढास्थिपरिपीडनम् । नेत्ररुग्गलरोगस्तु तथोन्मादः प्रजायते ॥ शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ॥ दैवविसंवादे ज्ञातिमरणादौ । तस्यैकस्येति तेन देशव्यापकमार्यादिव्यावृत्तिः ॥ अत्र तस्येत्यनेन पूर्वोक्ताभियुक्तपरामर्शादभियुक्तस्यैव रोगा-

20 दिर्भङ्गलिङ्गम् न तु तत्पुत्रादेः सोऽपि न महान् स्वल्प इति प्रागेवोक्तम् । एतदभिप्रायेणैवाभियुक्तस्यासाधारणरोगादिभिर्भङ्गलिङ्गमित्यर्थ इति **वाचस्पतिमिश्राः** ॥ अत एव ज्ञातिमरणमित्येवोक्त न तु ज्ञातिरोगादिरिति ॥

---

## ॥ अथ दायनिर्णयः ॥

अथ दायादिनिर्णयोपयोगि स्वत्वं ॥ तच्च क्रयप्रतिग्रहादिजन्यः शक्तिविशेषः ॥ त-

25　त्कारणता तु क्रयादीनां लोकव्यवहारादेव गम्यते न शास्त्रात् । दायनिर्णयः । तदनभिज्ञानामपि तद्दर्शनात् (१) शास्त्रकल्पनाया गौरवाच्च ॥ **नयविवेके भवनाथो**ऽप्येवम् ॥ यत्तु **गौतमः** स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरिति तल्लोक-

---

(१) मि० व्य० प० ४५ पृ० १
(२) य (ड) (च)
(३) जी० दा० प० १४ एतच्छाद्भिनं तर्कसङ्ग्रहदीपिकायाम् प० ४६
(४) जी० दा० प० २६
(५) मि० व्य० प० ४६ पृ० १, वी० प० १६१ पृ० २, क० वि०, व्य० मा०

सिद्धकारणानुवादकम् ॥ स्वामिस्वत्वसमानेन यत्स्वस्य भवति तस्मिन् रिक्थमिति प्रयुञ्जते लोकाः ॥ क्रयप्रतिग्रहादिव्यावर्तयितुं मात्रपदम् ॥ अत्र तादृशस्वत्व एव रिक्थपदं शक्तं क्रयादिस्वत्वोपायसमभिव्याहारात् । नागृहीतविशेषणान्यायाच्च[1] ॥ पितरि जीवति तद्द्रव्ये पुत्रादीनां पूर्वमनुत्पन्नमेव स्वत्वं सविभागेन जन्यत इति धारेश्वराचार्यः स्मृतिसङ्ग्रहकारश्च । तन्न । उत्पत्त्यैवार्थस्वामित्वं लभन्त इत्येवमादिवचनेन पुत्रोत्पत्तेरेव पितृधने पुत्रत्वनिरूपितस्वत्वोत्पादकत्वबोधनात् । भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा । तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोरिति याज्ञवल्क्यवचनाच्च (व्य० श्लो० १२१)॥ न चेदं पितामहमरणस्यैव स्वत्वोत्पत्तिहेतुत्वं गमयति न पुत्रोत्पत्तेः । मरणकालेऽनुत्पन्ने पौत्रे तदभावप्रसङ्गात् ॥ वस्तुतस्तु पितामहपदम् विवक्षितम् । अन्यथा प्रपितामहाद्युपात्ते सदृशस्वाम्याभावप्रसक्तेः । अनुवादविशेषणत्वाच्च ॥ यत्तु देवलः पितर्युपरते पुत्रा विभजेयुर्धनं पितुः[2] । अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते इति तत्र पूर्वार्धं तावद्विभागकालविधायकं विधिप्रत्ययश्रवणात् उत्तरार्धं तु तस्यैव स्तुत्यर्थतया स्वातन्त्र्यपरम् न तु स्वत्वाभावपरम् ॥ एतेन न जीवति पितरि पुत्रा रिक्थं विभजेरन् यद्यपि स्यात्पश्चादधिगतं तत्रनर्हा एव पुत्रा अर्थधर्मयोः अस्वातन्त्र्यादिति शङ्खवचो अपि व्याख्यातम्[3] ॥ पूर्वनिषेधार्थवादार्थोऽनन्तरास्वातन्त्र्योक्तिरिति । यद्यपि ते पश्चादधिगतमित्यन्वयः । ते पुत्रे । पश्चादुत्पन्ने । अधिगतं प्रतिग्रहादिना प्राप्तम् । पुत्रादिप्रतिगृहीते स्वत्वाविवादात् तत्राप्यस्वातन्त्र्यं किम्भुत पित्रार्जित इति तात्पर्यार्थः ॥ इदं चास्वातन्त्र्यं विभागकाम्यधर्मव्यवसायादिविषयम् ॥ अत एव हारीतः । जीवति पितरि पुत्राणामर्थादानविसर्गविभागाक्षेपेष्वस्वातन्त्र्यमिति[4] ॥ आदानविसर्गपदेन व्यवसायो लक्ष्यते । आक्षेपो दास्यादिभर्त्सनमिति मदनः ॥ यत्तु मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामह इति तत्कुण्डलाङ्गुलीयकधारणादावेव पितुः स्वातन्त्र्यमात्रार्थं न तु दानादौ न वा पुत्रोपत्तेः स्वत्वकारणत्वनिवृत्त्यर्थम्[5] ॥ भोगानाश्यमण्याद्युपादानादप्येष एवार्थः प्रतीयते ॥ अत एव स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् । असम्भूय सुतान्सर्वान्न दानं न च विक्रयः इति दानविक्रयादी- नामेव निषेधो न भोगस्य[6] ॥ अतः पूर्वमनेकभ्रात्रादीनामपरिच्छिन्नं स्वत्वं सविभागेन व्यवस्थाप्यते । तत्र समुदितद्रव्यगतपूर्वस्वत्वनाशेन तदेकदेशे विलक्षणं तदुत्पद्यत इति केचित् ॥ युक्तं तु पूर्वनाशस्वत्वान्तरोत्पत्तिकल्पने गौरवात् पूर्वमेकदेशस्थितमे

---

(१) अगृहीतविशेषणा बुद्धिर्विशेष्ये नोपजायत इति न्यायशरीरम् (नागेशकृतलघुमञ्जूषाया नामार्थवादे स्पष्टमेतत्)

(२) जी० दा० प० २१।२२

(३) मि० व्य० प० ४७ पृ० २ वी० प० १६१ पृ० १

(४) वी० प० १७५ पृ० २ व्य० मा० क० वि०

(५) वी० प० १६१ पृ० १ क० वि० व्य० मा०

(६) वी० प० १६६ पृ० १ (यद्यपि स्वाम्यं पश्चादधिगतमिति पाठो वीरमित्रोदये) व्य० मा०

(७) व्य० मा० क० वि०

(८) इदं विष्णुवचनमिति कमलाकरे लिखितम् मि० व्य० प० ४७ पृ० १ वी० प० १६० पृ० २

(९) जी० दा० प० ५५।५६

(१०) मि० प० ४७ पृ० २ वी० प० १६३ पृ० २ व्य० मा० क० वि० इदं नारदवचनमिति कमलाकरः

मोत्पन्नं विभागेन पदार्थविशेषनिष्ठनया ज्ञाप्यते ॥ प्रकृतमुच्यते ॥ ब्राह्मणस्याधिकं
लब्धमिति प्रतिग्रहलब्धं विप्रस्याधिकं फलजनकमिति केचित् ॥ रिक्थाद्यपेक्षया वि-
प्रस्यैवायमधिक उपायः ॥ एवं क्षत्रियादेर्जयादिरिति तु युक्तम् ॥ जयेऽपि जितस्य यत्र
गृहक्षेत्रद्रव्यादौ स्वत्वमासीत्तत्रैव जेतुरप्युत्पद्यते ॥ जितस्य करग्राहितायां तु जेतुरपि नैव
5 न स्वत्वम् ॥ अत एव सार्वभौमेन सम्पूर्णा पृथ्वी माण्डलिकेन च मण्डलं न देयमित्युक्तं
षष्ठे ॥ सम्पूर्णपृथ्वीमण्डलस्य तत्तद्ग्रामक्षेत्रादौ स्वत्वं तु तत्तद्भौमिकादीनामेव राज्ञां
तु करग्रहणमात्रम् ॥ अत एवेदानीन्तनपारिभाषिकक्षेत्रदानादौ न भूदानसिद्धिः किंतु
वृत्तिकल्पनमात्रमेव ॥ भौमिकेभ्यः क्रीते तु गृहक्षेत्रादौ स्वत्वमप्यस्त्येव ॥ तेन तत्र
भूदानस्यापि फलं भवति ॥ निर्विष्टं कुसीदकृषिवाणिज्यपशुपालनलब्धं सेवाल-
10 ब्धं च । निर्वेशो भृतिभोगयोरित्यभिधानात् ॥ भृतिः सेवा । भोगः कुसीदादि. ।
तत्राद्यं वैश्यस्य द्वितीयं शूद्रस्य ॥ अतो लोकसिद्धैव क्रयादीनां कारणता ॥
एवं च स्त्रीपशवादिजातवत्सादौ स्वत्वव्यवहारः संगच्छते ॥ उपायानां शास्त्रगम्यत्वे
तु न स्यात् । स्त्रीपशवादिजननरूपोपायस्य शास्त्रेणाबोधनात् ॥ ननु स्त्रीपशवा-
दिजननेनेव स्वभार्यायामुत्पत्त्या कन्यापुत्रादावपि स्वत्वं स्यात् । इष्टापत्तौ विश्वजि-
15 ति सर्वस्वं ददातीति विहिते सर्वस्वदाने कन्यापुत्रादिदानापत्त्या कन्यापुत्रादि
न देयमिति षाष्ठसिद्धान्तविरोध इति चेन्न ॥ गवादाविव भार्यायां स्वत्वाभावेन तस्या-
मुत्पन्नेऽपत्ये तदभावात् ॥ लोके च स्वत्वास्पदीभूतोत्पत्तेरेव स्वत्वकारणत्वं क्लृप्तम् ॥
भार्यायामपि प्रतिग्रहेण स्वत्वं स्यादिति चेन्न ॥ क्षत्रियादीनां प्रतिग्रहाभावेन तद्भार्यासु
स्वत्वाभावात्तदपत्येष्वपि तदभावः ॥ तेन (या० व्य० श्लो० १३२) सजातीयेष्वयं प्रोक्तस्त-
20 नयेषु मया विधिरिति सजातीयस्यैव दत्तकस्य ग्राह्यत्वात्क्षत्रियादीन्प्रति तावद्दत्तक-
प्रतिग्रहो गौण एव ॥ न च विप्रान्प्रति स मुख्यः संभवति । तद्विधौ युगपद्वृत्तिद्वयविरो-
धात् ॥ न च पुत्रप्रतिग्रहविधिर्विप्राधिकारिक एव न क्षत्रियाद्यधिकारिक इति
वाच्यम् । दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयत इत्यादिशौनकादिवचोभिस्तद-
धिकारिकत्वस्याप्यवगमात् ॥ एवं ब्राह्मविधिना क्षत्रियादिकन्ययाऽऽह विप्रस्योद्वाहे
25 दानप्रतिग्रहयोर्गौणत्वमङ्गीकार्यम् । अन्यत्र मुख्यत्वमिति वृत्तिद्वयविरोधः ॥ क्षत्रिया-
न्प्रति ब्राह्मादिविवाहप्रवृत्तिस्तु सर्वेषामविप्रतिपन्नैव ॥ अत एव पुत्रादीनां दानं गौणमिति
तत्त्वरत्ने मिथ्या ॥ न च स्वा भार्यापुत्रकन्या इति शाब्दव्यवहारात्स्वत्वकल्पना ।
तस्य स्वः पिता स्वा मातेत्यादाविव ज्ञातिवाचकत्वेनाप्युपपत्तेः ॥ अस्ति च ज्ञातावपि
स्वशब्दस्य शक्तिः । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने इति कोशात् ।
30 यत्तु षष्ठे गर्भदासदानमुक्तं तच्चिन्त्यम् । तन्मातरि मुख्यदानप्रतिग्रहक्रयविक्रयाद्य-
भावेन स्वत्वाभावे तदुत्पन्ने गर्भदासे सुतरां तदयोगादित्यन्तु प्रासङ्गिकम् ॥

(१) अ० को० का० ३ व० ३ श्लो० २१४.

(२) मीमांसादर्शने षष्ठेऽध्याये सप्तमे पादे स्व-
दाने सर्वस्वदानाद्दोषाधिकरणे स्पष्टी-
कृतमेतत् (मीमांसादर्शनं सभाष्य पूर्व
र्द्ध पृ० ७४३।७४४, कलिकाता)

(३) मिताक्षरादिमते स्वत्वमस्त्येव (मि० व्य०
प० ७० पृ० २, वी० प० १०५ पृ० १)

(४) वी० प० १९३ पृ० २.

(५) अ० को० का० ३ व० ३ श्लो० २१०.

अथ दाय ॥ असमृष्ट विभजनीय धनं दायं ॥ लाभादार्थसंसृष्टधनव्यावृत्तयेऽसं-
दाय । सृष्टमिति । वणिग्भिरेकीकृत्य विभज्यमाने दायभागशब्दाप्रयोगात् ॥ एव वक्ष्यमाणपारिभाषिकससर्गवतोऽपि निवृत्ति ।
अत एव स्मृतिसङ्ग्रहे । पितृद्वारागत द्रव्य मातृद्वारागत च यत् । कथित दायशब्देन तद्विभागोऽधुनोच्यते इति ॥ निघण्टौ च । विभक्तव्य पितृद्रव्य दायमाहुर्मनीषिण 5
इति ॥ पितृपद सम्बन्धिमात्रोपलक्षणम् ॥

अथ दायो द्वेधा सप्रतिबन्धोऽप्रतिबन्धश्च । यत्र धनस्वामिनस्तत्पुत्रादेश्च जीवन प्रतिबन्धक स सप्रतिबन्ध । यथा पितृव्यादिधनम् ॥ यत्तु स्वामिसम्बन्धादेव पुत्रादेर्धनार्जनोपायान्तरानिरपेक्षत्वात्स्वत्व भवति सोऽप्रतिबन्ध । यथा पितृधनम् ॥ इति दायस्वरूपम् ॥ 10

अथ तद्विभाग ॥ तमाह नारद । विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
तद्विभाग । दायभाग इति प्रोक्त तद्विवादपद बुधै ॥ पुत्रैरिति पौत्रादीनामुपलक्षणम् । पित्र्यस्येति पितामहादीनाम् ॥ मदनस्तु पित्र्यादेरित्येव पपाठ ॥ इद च दायभागस्वरूपमुक्तम् ॥ द्रव्यसामान्याभावेऽपि त्वत्तोऽह विभक्त इति व्यवस्थामात्रेणापि भवत्येव विभाग । बुद्धिविशेषमात्रमेव हि विभागः ॥ 15
तस्यैवाभिव्यञ्जिकेय व्यवस्था ॥

अथ विभागकाल ॥ मनु (अ० ९ श्लो० १०४) । ऊर्ध्वं पितुश्च मातुश्च समेत्य
विभागकाल । भ्रातर समम । भजेरन्पैतृक रिक्थमनीशास्ते हि जीवतो ॥ चशब्दोपादानेऽपि मरणसमुच्चयो न विवक्षितं ॥ अत एव मद
नरत्ने स्मृतिसङ्ग्रहे । पितृद्रव्यविभाग स्याज्जीवन्त्यामपि मातरि । न स्वतन्त्रतया 20
स्वाम्य यस्मान्मातु पति विना ॥ मातृद्रव्यविभागोऽपि तथा पितरि जीवति । सत्स्व पत्येषु यस्मात्स्त्रीधनस्य पति पति ॥ एतदपवदति बृहस्पति । पित्रोरभावे भ्रातृणा विभाग सम्प्रदर्शित । मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥ नारद । अत ऊर्ध्वं पितु पुत्रा विभजेयुर्धन समम । मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ॥
निवृत्ते चापि रमणे पितर्युपरतस्पृहे ॥ रमण काम । उपरतस्पृहो विरक्त । प्रत्तासु 25
भगिनीषु चेति काकाक्षिवद्रजोरमणनिवृत्त्योर्विशेषणम् ॥ गौतम । ऊर्ध्वं पितु पुत्रा रिक्थ विभजेरन् निवृत्ते रजसि मातुर्जीवति पितरि चेच्छतीति ॥ इच्छतीत्यनेन रजोनिवृत्तिं विनापि पितुरिच्छया विभाग उक्त ॥

काचित्तदिच्छा विनापि विभागमाह बृहस्पतिः । क्रमागते गृहक्षेत्रे पितापुत्राः समांशिनः । पैतृके न विभागार्हाः सुताः[१] पितुरनिच्छया ॥ अर्थात्पितामहार्जिते तदनिच्छयापि विभागार्हा इत्यर्थः ॥

पैतामहेऽपि काचित्पितुरिच्छयैव विभागमाहतुर्मनुविष्णू (अ० ९ श्लो० २०९) ।
5 पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् । न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥ बृहस्पतिः । पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् । विद्याशौर्यादिनावाप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥ प्रदानं स्वेच्छया कुर्याद्भोगं चैव ततो धनात् ॥

नारदः । व्याधितः कुपितश्चैव विषयासक्तमानसः । अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः ॥ हारीतः । अकामे पितरि रिक्थभागो वृद्धे विपरीतचेतसि दीर्घरो-
10 गिणि चेति[२] ॥ अकामे विभागेच्छारहित इति मदनरत्ने । विपरीतचेता अधर्मवर्ती । पितुरनिच्छायामपि विभागो भवतीति भावः ॥

पितर्यसमर्थे ज्येष्ठपुत्रानुमत्या विभागमाह हारीतः । कामं दीने प्रोषिते आर्ते गते वा ज्येष्ठो अर्थांश्चिन्तयेदिति[३] ॥ शङ्खलिखितौ । पितर्यशक्ते कुटुम्बस्य व्यवहारं ज्येष्ठः कुर्यात्तदनन्तरो वा कार्यज्ञस्तदनुमतेनेति[४] ॥ अनन्तरोऽनुजः । कुटुम्बभरणादिसमर्थे-
15 च्छया विभागः । सर्वेषां तथात्वे त्वानियम इति निष्कृष्टोऽर्थः ॥ याज्ञवल्क्यः (व्य० श्लो० ११४) । विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् । ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥ ऐच्छिकविभाग एव विवृत उत्तरार्धेन । इच्छाया सम्भवति उक्तपक्षद्वयावलम्बनत्वे स्वातन्त्र्यायोगात् । वाक्यभेदापत्तेः । एकस्मै लक्षं कस्मैचित्कपर्दिकमन्यस्मै न किमपीत्यव्यवस्थापत्तेश्च ॥

20 ज्येष्ठविभागे विशेषमाह मनुः (अ० ९ श्लो० ११२।११६।११७) । ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु कनीयसः ॥ उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना । एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽपरः ॥ अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ॥ यमलयोर्मध्ये प्रथमप्रसूतस्य ज्येष्ठ्यमाह मनुः (अ० ९ श्लो० १२६) । जन्मज्येष्ठेन चाह्वानं
25 सुब्रह्मण्यास्वपि स्मृतम् । यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता ॥ यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् । संतानः पितरश्चैव तस्मिन् ज्येष्ठ्यं प्रतिष्ठितमिति ॥ यत्तु पिण्डसिद्ध्यादिवैयर्थ्यमन्त्येऽनन्तरप्रसूतस्य ज्येष्ठ्यमुक्तं तदनेन कार्यांशे बाध्यते । तस्याश्रुतिमूलत्वात् । मासेन शुद्धिर्भवतीतिवत् । यत्तु द्वौ तदा भवतो गर्भौ सूतिवशविपर्ययादित्यादिना भागवते पश्चा-
30 ज्जातस्य ज्येष्ठ्यमुक्तं तदप्यनेन बाध्यते । पुराणेषु स्मृतिविरुद्धाचाराणां बहुशो दर्श

विषमविभागः ।

ज्येष्ठस्वरूपम् ।

---

(१) वी० प० १७७ पृ० २
(२) मि० व्य० प० ४८ पृ० २ वी० प० १७७ पृ० २ क० वि० व्य० मा०
(३) वी० प० १७७ पृ० २
(४) ज्येष्ठो वा अर्थांश्चिन्तयेदिति पाठः (वी० प० १७९ पृ० २)
(५) वी० प० १७९ पृ० २
(६) वी० प० १७७ पृ० १, क० वि० व्य० मा०
(७) मि० व्य० ४९ पृ० १, वी० प० १७१ पृ० १ क० वि० व्य० मा०
(८) दयन्त इत्युपक्रम्यदं वचनं निर्णयसिन्धावुक्तम् परि० १ पू० प० १० पृ० १

नान् ॥ देशाचारतो व्यवस्था ज्ञेयेति केचित् ॥ युक्त तु पूर्वोक्तमेव ॥ अथ चोद्धारविभाग कलौ नेष्ट । कलिवर्ज्येषु पाठात् ॥ निर्णीत चेद समयमयूखेऽस्माभि ॥ पितुरशद्व यमाह नारदः । द्वावशो प्रतिपद्येत विभजन्नात्मन पिता । इद लेकपुत्रपरम् । स यद्येकपुत्र स्याद्द्वौ भागावात्मन कुर्यादिति शङ्खलिखितोक्तेरिति मदनरत्ने ॥ एक पद श्रेष्ठपरम् । एके मुख्यान्यकेवला इत्यमरोक्ते ॥ गुणवपुत्र इति यावदिति पारिजाते ॥

पितामहार्जिते लेकपुत्रेणापि सह समांशित्वमाह बृहस्पति । द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा । सममंशित्वमाख्यात पितु पुत्रस्य चैव हि ॥ याज्ञवल्क्यः (व्य० श्लो० १२१) भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा । तत्र स्यात्सदृश स्वाम्य पितु पुत्रस्य चोभयो ॥ कात्यायन । सकल द्रव्यजात यद्भागैर्गृह्णन्ति तत्समे । पितरो भ्रातरश्चैव विभागो धर्म्य उच्यते । यत्तु याज्ञवल्क्य (व्य० श्लो० ११६) न्यूनाधिकविभक्ताना धर्म्य पितृकृत स्मृतं इति तत्र पितृकृतो धर्म्यश्चेत्स्मृतो न परावर्तनीयं इति मदनविज्ञानेश्वरादय ॥ यदपि नारद पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनै । तेषा स एव धर्म स्यात्सर्वस्य हि पिता प्रभुरिति तद्युगान्तरपरम् ॥

पैतामहे पैत्रस्य पितृसमांशित्वम् ।

स्वस्य पुत्राणा च समाशपक्षे पत्न्या अप्यशमाह याज्ञवल्क्य (व्य० श्लो० ११५)। यदि कुर्यात्समानशान्पत्न्य कार्या समाशिका । न दत्त स्त्रीधन यासा भर्त्रा वा श्वशुरेण वा इति ॥ दत्ते त्वर्धं देयम् । दत्ते त्वर्धं प्रकल्पयेदिति वचनात् ॥ अर्धं पूर्वं दत्त स्त्रीधन यावता पुत्राशसम भवति तावदित्यर्थ ॥ अत्राधिकधनायास्तु नाश ॥

अर्जनसमर्थस्य पुत्रस्यानीहमानस्य दायजिघृक्षाभावमाह स एव (व्य० श्लो० ११६) शक्तस्यानीहमानस्य किंचिद्दत्वा पृथक्क्रिया ॥ किंचिदान च तत्पुत्राणा दायजिघृक्षानिवृत्त्यर्थमिति मिताक्षरायाम् ॥

पितृमरणानन्तर समविभाग उक्त स्मृत्यतरे (या० व्य० श्लो० ११७) । विभजेरन्सुता पित्रोरूर्ध्वं रिक्थमृण समम् ॥ हारीत । समानो मृते पितरि रिक्थभाग इति[15] ॥

दायजिघृक्षाऽभाव । मृत पितरि विभाग ।

---

(१) निर्णयसिन्धौ परि० ३ पू० प० १० पृ० १

(२) तथोद्धारविभागस्तु नैव सम्प्रतिवर्तते इति कलिवर्ज्येषु पाठादित्यपि पाठ क्वचिद्दृश्यते (क) (अ) इद हेमाद्रिधृतवचनमिति निर्णयसिन्धु परि० ३ पू० प० ६२ पृ० २ तथाच आदित्यपुराण इत्युपक्रम्योपयस्त वीरमित्रोदये प० १०४ पृ० १

(३) मि० व्य० प० ५१ पृ० १ वी० प० १०४ पृ० २ क० वि० व्य० मा०

(४) जी० दा० प० ८२

(५) अ० को० का० ३ व० ३ श्लो० ११

(६) वी० प० १०६ पृ० १ क० वि व्य० मा०

(७) जी० दा० प० ५०

(८) वी० प० १०६ पृ० २

(९) वी० प० १०२ पृ० २

(१०) जी० दा० प० ८९

(११) क० वि०

(१२) वी० प० १०२ पृ० १ क० वि० व्य० मा०

(१३) वी० प० १०६ पृ० २ क० वि० व्य० मा०

(१४) मि० व्य० प० ४८ पृ० २

(१५) वी० प० १०४ पृ० १

याज्ञवल्क्य (व्य० श्लो० १२३)। पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् ॥
मात्रंश। विष्णुः। मातरः पुत्रभागानुसारिभागहारिण्यः ॥ स्मृत्यन्तरे।
जननी त्वधना पुत्रैर्विभागेऽंशं समं हरेत् ॥ सधना तु यावता स्वधनस्य पुत्रांशसमभागता भवति तावदेव हरेदित्यर्थः। अंशाधिकधनायास्तु नांशः ॥

सापत्नमातुः पितामह्याश्चांशमाह व्यासः। असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः। पितामह्यश्च ताः सर्वा मातृतुल्याः प्रकीर्तिताः ॥
सपत्नमातृपितामह्यंशः। सर्वा इत्यनेन पितामहीसपत्न्योऽपि गृह्यन्ते ॥

अनेकभ्रातृपुत्राणां विभागप्रकारमाह याज्ञवल्क्यः (मि० व्य० श्लो० १२०)। अनेकपितृकाणां तु पितृतो भागकल्पना ॥ एकस्यैकः पुत्रोऽपरस्य द्वावन्यस्य त्रयस्तेषां
10 पितृसंख्ययैव विभागो न विभाजकसंख्ययेत्यर्थः ॥ कात्यायनः। अविभक्तेऽनुजे प्रेते तत्सुतं रिक्थभागिनम्। कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥ लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात्। स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ॥ लभेत तत्सुतो वापि निवृत्तिः परतो भवेत् ॥ अनुजपदं ज्यायसोऽप्युपलक्षणम्।
परत प्रपौत्रात् ॥ प्रपौत्रपुत्रादिः पितृपितामहप्रपितामहेषु मृतेष्वनन्तरं वृद्धप्रपितामहे मृतेऽस्मिंश्च तत्पुत्रादिके जीवति तद्धनं न लभते। पुत्रपौत्रप्रपौत्रसामान्याभावे सोऽपि लभत एवेत्यर्थः ॥
15 दायग्रहणे पुत्रादीनामवधिः।
इदं च नाविभक्तपरं किंतु संसृष्टपरम्। अविभक्तविभक्तानां कुल्यानां वसतां सह। भूयो दायविभागः स्यादाचतुर्थादिति स्थितिरिति देवलोक्तेः ॥ ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत्। चिरकालप्रोषितो वा भागभागागतस्तु सः ॥
20 गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः। तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः ॥ अविभक्तविभक्तानां वृद्धप्रपितामहपुत्राणां च संसृष्टानामित्यर्थः ॥ इदं च समदेशस्थितपरम् ॥ देशान्तरस्थस्तु पञ्चमादिरपि लभत एव। तृतीयः पञ्चमश्चैव सप्तमश्चापि यो भवेत्। जन्मनामपरिज्ञाने लभेतांशं क्रमागतमिति देशान्तरप्रक्रमेण बृहस्पतिस्मृतेः ॥

25 कश्चिन्मातृतो विभागमाह बृहस्पतिः। यद्येकजाता बहवः समाना जातिसंख्यया। सापत्न्यास्तैर्विभक्तव्यं मातृभागेन धर्मतः ॥ व्यासः। समानजातिसंख्या ये जातास्त्वेकेन सूनवः। विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते ॥ एतत्प्रत्युदाहरणमाह बृहस्पतिः। सवर्णा भिन्नसंख्या ये पुंभागस्तेषु शस्यते ॥
मातृतोऽपि विभागः।

---

(१) वी० प० १४९ पृ० १ क० वि० व्य० मा०
(२) वी० प० १८० पृ० १
(३) वी० प० १७९ पृ० १ क० वि० व्य० मा०
(४) प्रमीतपितृकाणामित्यपि पाठः वीरमित्रोदये प० १०० पृ० १
(५) वी० प० १०० पृ० २ क० वि०
(६) क० वि० (अथ लभेतांशमित्यादिकमेव वर्तते) व्य० मा०
(७) वी० प० १०० पृ० १ क० वि० व्य० मा०
(८) क० वि०
(९) वी० प० १८९ पृ० १ क० वि०
(१०) क० वि०

विजातीयविभागमाह **याज्ञवल्क्य** (व्य० श्लो० १२५)। चतुस्त्रिद्व्येकभागा सु क्रमशो ब्राह्मणात्मजा। क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः॥ ब्राह्मणात्मजा ब्राह्मणीक्षत्रियवैश्याशूद्रासु जाता। क्षत्रजा क्षत्रियवैश्याशूद्रासु जाता। विड्जा वैश्याशूद्रयोर्जाता॥ **वृहस्पति**। न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै। यद्यप्येषा पिता दद्यान्मृते विप्रासुतो हरेत्॥ **देवल**। शूद्रा द्विजातिभिर्जातो न भूमेर्भागमर्हति। सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः॥ भूमेः क्रयादिप्राप्ताया अपि। द्रव्यस्य तु लभत एव॥ अपरिणीतशूद्रापुत्रस्तु द्रव्यांशमपि न लभते॥ तथा च **मनु** (अ० ९ श्लो० १५५)। ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्। यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्॥ पितृमरणोत्तरं विशेषमाह **वृहस्पति**। अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः। लभेत जीवनं शेषं सपिण्डाः समवाप्नुयुः॥ **गौतम**। शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभते वृत्तिमूलम्॥ वृत्तिमूलं जीवनकारणम्॥ स एव। शूद्रापुत्रवत्प्रतिलोमास्विति॥ प्रतिलोमास्तूत्पादकापेक्षयोत्कृष्टवर्णस्त्रीपुत्रा॥ शूद्रेणापरिणीतायामुत्पन्ने विशेषमाह **याज्ञवल्क्य** (व्य० श्लो० १३३।१३४)। जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्। मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्॥ कामः पितुरिच्छा। शूद्रेणेति पदात् द्विजातिभिर्दास्यामुत्पन्नस्तु पितुरिच्छयापि नांशभाक्॥ नापि पितृमरणोत्तरमर्धं नापि पुत्राद्यभावे सर्वमिति **मदनरत्नादिषु**॥

> विजातीयविभाग।
>
> शूद्रापुत्रस्य।

विभागानन्तरोत्पन्नपुत्रे विशेषमाह **गौतम**। विभक्तजः पित्र्यमेवेति॥ **वृहस्पतिरपि**। पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम्। विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः॥ यथा धने तथर्णे च दानाधानक्रयेषु च। परस्परमनीशास्ते मुक्त्वाशौचोदकक्रियाम्॥ ऋणमात्रार्थे तु पूर्वविभक्तेभ्यो विभागग्रहणं विना तेनर्णं नैव देयम् (या० व्य० श्लो० ५१)। रिक्थग्राही[1] ऋणं दाप्य इति वक्ष्यमाणत्वात्॥ कस्मिंश्चित्संसृष्टे तु तेन सह विभागः। ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत्। संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सहेति मनूक्तेः[12] (अ० ९ श्लो० २१६)॥ पितृमरणोत्तरविभागकालेऽस्पष्टगर्भायां मातरि तत्सपत्न्यां भ्रातृपत्न्यां वाऽनन्तरसमुत्पन्ने विशेषमाह

> विभागानन्तरोत्पन्नपुत्रे।

---

(१) वी० प० १८३ पृ० १ क० वि० व्य० मा०
(२) मि० व्य० प० ५३ पृ० २ वी० प० १८४ पृ० १ क० वि० व्य० मा०
(३) मि० व्य० प० ५३ पृ० २ वी० प० १८४ पृ० २ क० वि० व्य० मा०
(४) क० वि०
(५) मेत्यति॥ प्रतिलोमेषूत्पादकापेक्षयोत्कृष्टवर्णस्त्रीपुत्राश्चेत्यर्थः (ख) (ग) (च)
(६) वी० प० १९२ पृ० २ क० वि०
(७) मि० प० ५६ पृ० २ वी० प० १९२ पृ० २
(८) इदं वचनं गौतमीयमिति वीरमित्रादयाभिहितम् प० १८३ पृ० २
(९) भा (क) (ख) वीरमित्रोदये च
(१०) वी० प० १८२ पृ० २
(११) ह (क) (ख) (घ) (ङ)
(१२) मि० प० ५१ पृ० २ वी० प० १८२ पृ० २ क० वि० व्य० मा०

क्षेत्रजोऽपुत्रभ्रात्रादिपत्न्यां गुर्वाज्ञया देवरादिसगोत्रेणोत्पन्न ॥ अक्षतायां पूर्वेणोढ्भुक्ताया क्षतायां तेन भुक्ताया वा वोढ्रन्तरेणोत्पन्न पौनर्भव ॥ अथ दत्तकभिन्ना गौणा पुत्रा कलौ वर्ज्या । दत्तोरसेतरेषां तु पुत्रत्वे न परिग्रह इति तन्निषेधेषु पाठात् ॥

## ॥ अथ दत्तकप्रकरणम् ॥ 5

अथ दत्तकविधि ॥ मनु (अ० ९ श्लो० १६८) । माता पिता वा दद्याता यमद्भि पुत्रमापदि । सदृश प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिम सुत ॥

दत्तक ।

वाशब्दान्मात्रभावे पितैव दद्यात् पित्रभावे मातैव उभयसत्त्वे तु उभावपीति मदन ॥ आपद्ग्रहणादनापदि न देय ॥ अथ निषेधो दातुरेव पुरुषार्थो न क्रत्वर्थ इति विज्ञानेश्वरे । तन्न । अस्य वाक्यादृष्टार्थतया क्रत्वर्थत्वावगमात् । कथञ्चिद्दृष्टार्थत्वेऽपि वा नियमादृष्टस्य आवश्यकत्वान्न तदतिक्रमे कार्यविशेषप्रयोजकादृष्टसिद्धि. ॥ केचित्त्वापच्छब्दस्य स्वार्थत्यागाद्यापत्तेरनापत्परिसंख्यापकत्वाभावेन न निषेधार्थकत्वम् । किन्त्वापदो निमित्तमात्रबोधकत्वमेव ॥ नच नैमित्तिकत्व आपदि पुत्रादाने प्रत्यवायापत्ति । एतद्वाक्यस्य सम्प्रदानसम्बन्धमात्रबोधकत्वात् । आपदि निमित्ते दानविधायकत्वाभावात् ॥ यदपि विवाहप्रकरणे तेनैवोक्त रोगिण्यादिनिषेधातिक्रमे 15 दृष्टविरोध एव भार्यात्व तूत्पद्यत एवेति तदप्यनेनैवापास्तम ॥ सदृश कुलगुणादिभिर्न जात्या । अत क्षत्रियादिरपि विप्रादेर्दत्तको भवतीति मेधातिथि । सदृश जात्येति कुल्लूकभट्ट (म० अ० ९ श्लो० १६८।१६९) ॥ युक्त चेदम् । याज्ञवल्क्येन (व्य० श्लो० १२८) ओरसो धर्मप नीज इति द्वादशापि पुत्राननुक्रम्य (व्य० श्लो० १३३) सजातीयेष्वय प्रोक्तस्तनयेषु मया विधिरित्युपसंहारात् ॥ स्पष्टीकरिष्यते चेद वक्ष्यमाणशौनकवचोभ्याम् ॥ विज्ञानेश्वरोऽप्येवम् । ज्येष्ठेन जातमात्रेण पुत्री भवति मानव इति ज्येष्ठस्यैव पुत्रकार्यकरणे मुख्यत्वात्स न देय इत्ययमपि निषेधो दातुरेव न प्रतिग्रहीतुरित्यपि स ॥ स्यादय प्रतिषेधो दातुरेव यद्येतस्य ज्येष्ठदाननिषेधकता स्यात ॥ नतु सास्ति । मानाभावात । पुत्री भवतीत्यनेन पुत्रित्वमात्रोक्त्या ऋणापाकरणोक्तिमात्रपरत्वाच्च ॥ अत एव पितृणामनृणश्चैव स तस्मात्सर्वमर्हतीत्युत्तरार्धं सगच्छते । सर्वं 25 द्रव्यम् ॥ दत्तकश्च पुमानेव भवति न कन्या । स ज्ञेयो दत्त्रिम सुत इति सञ्ज्ञासाञ्ज्ञिसम्बन्धबोधकवाक्यगतेन स इति सर्वनाम्ना मातापितृकर्तृकप्रीतिजलगुणकापन्निमित्तकदानकर्मीभूतसजातीयपुंस एवाष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेति तच्छब्देनाष्ट-

---

(१) निर्णयसिन्धौ परि० ३ पू० प० ६३ पृ० १
(२) मि० व्य० प० ५५ पृ० १ वी० प० १८८ पृ० २ क० कि०
(३) मि० व्य० प० ५५ पृ० १
(४) च चिन्हितपुस्तके आवश्यक वात्तद तिक्रमे इत्येव पाठो दृश्यते । किन्तु (ख) (ग) (ङ) (छ) चिन्हितपुस्तकेषु दृष्ट न. इति पदमत्रावश्यमपेक्षितमिति न मूले निवेशितम्
(५) म० अ० ९ श्लो० १०६
(६) म० अ० ९ श्लो० १६८
(७) अष्टमे वर्षे ब्राह्मणमुपनयेदि त्याश्वलायनसूत्रम् (अ० १ क० १९ सू० १)

वर्णेन्नाह्मण्यपुत्त्वोपनयनादिसस्कृतस्यैव परामर्शात ॥ एतेन क्त्रेर्मम् नित्यमिति मबन्तो दत्त्रिमशब्दो दानानिर्वृत्तकमत्वाविशेषाद्दरायान्यस्मै वा दत्ता कन्यामप्यभिधत्त इति केषाचिदुक्ति परास्ता ॥

पुत्रप्रतिग्रहप्रकारमाह शौनक । शौनकोऽह प्रवक्ष्यामि पुत्रसङ्ग्रहमुत्तमम् । अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥ वाससी कुण्डले दत्त्वा उष्णीष चाङ्गुलीयकम् । आचार्यं धर्मसयुक्त वैष्णवं वेदपारगम ॥ बर्हि कुशमयं चैव पालाश चेध्ममेव च । एतानाहृत्य बन्धूश्च ज्ञातिमाहूय सत्तम ॥ बन्धूनन्नेन सम्भोज्य ब्राह्मणाश्च विशेषत । अन्वाधानादि यत्तत्र कृत्वाज्योपवनादिकम् ॥ दातु समक्ष गत्वा तु पुत्र देहीति याचयेत् । दाने समर्थो दाताऽस्मै येयज्ञेनेति पञ्चभि ॥ देवस्यत्वेति मन्त्रेण हस्ताभ्या प्रतिगृह्य च ॥ अङ्गादङ्गेत्यृच जप्त्वा चाघ्राय शिशुमूर्धनि ॥ वस्त्रादिभिरलङ्कृत पुत्रच्छायावह सुतम । नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च सयुतम ॥ गृहमध्ये तमादाय चरु हुत्वा विधानत । यस्त्वाहृदेत्यृचा चैव तुभ्यमग्रऋचैकया ॥ सोमोददद्दित्येताभि प्रत्यृच पञ्चभिस्तथा । स्विष्टकृदादिहोम च कृत्वा शेष समापयेत् ॥ ब्राह्मणाना सपिण्डेषु कर्तव्य पुत्रसङ्ग्रह । तदभावेऽसपिण्डो वा अन्यत्र तु न कारयेत् ॥ क्षत्रियाणा स्वजातो वा गुरुगोत्रसमोऽपि वा । वैश्याना वैश्यजातिषु शूद्राणा शूद्रजातिषु ॥ सर्वेषामेव वर्णाना जातिष्वेव न चान्यत । दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते ॥ नैकपुत्रेण कर्तव्य पुत्रदान कदाचन । बहुपुत्रेण कर्तव्य पुत्रदान प्रयत्नत ॥ दक्षिणा गुरवे दत्त्वा यथाशक्ति द्विजोत्तम । नृपो राष्ट्रार्धमेवापि वैश्यो वित्तशतत्रयम् ॥ शूद्र सर्वस्वमेवापि अशक्तौ तद्यथाबलम् ॥ छायावह सदृशम् ॥ दौहित्रो भागिनेयश्चेति यथा भूतभाव्युपयोगित्वेन दण्डस्य मैत्रावरुणाय दण्ड प्रयच्छतीत्यत्र सम्भवत्यपि भाव्यत्वे चतुर्थ्यो दण्डी प्रैषानन्वाहेति प्रैषानुवचनकर्तृत्वेन भाव्युपयोगिनो मैत्रावरुणस्यैव भाव्यत्वमुक्तम ॥ तथेहाप्यन्यपाकृतर्णत्वेन चतुर्थ्यर्थपष्ठ्या शूद्रस्यैव दौहित्रभागिनेयावपि प्रति शेषितया भाव्यत्वम् ॥ अतस्तयोरेव विधेयत्वेन दौहित्रभागिनेयावेव शूद्रस्येति नियमविधिविषयताप्युक्ता । शूद्रस्य त्वविधेयत्वेन तद्विषयत्वायोगात । तौ शूद्रस्यैवेति वचनव्यक्तौ विप्रादिशेष्यन्तरपरिसङ्ख्यापत्ते ॥ तस्माद्दौहित्रभागिनेयावेव शूद्रस्य मुख्यौ ॥ तदभावेऽन्योऽपि सजातीय । शूद्राणा शूद्रजातिष्विति तेनैवोक्ते ॥ नचेद जातिपद दौहित्रभागिनेययोरेवोपसह्रियते । दौहित्रत्वभागिनेयत्वयो सजातीयत्वस्य च परस्परव्यभिचारित्वात् । एकस्मृतौ सामान्यवाक्यवैयर्थ्यापत्तेश्च ॥ विवृत चैतद्द्वैतनिर्णये तातचरणे ॥ शिष्टाचारो

---

(१) पाणिनि अ ४ पा ४ सू १०

(२) कुशसममिति पाठो बहुषु पुस्तकेषु दृष्टोऽपि न साधुरिति सस्कारकौस्तुभादृष्ट कुशमयमिति पाठोऽङ्गीकृत ॥

(३) चाचैव (क) (ख) (घ) (ङ)

(४) दृत्तरातत्रयमिति संस्कारकौस्तुभ पाठो दृश्यत ॥

(५) दत्तकमीमासाया पृ० २५।२५ दत्तकचन्द्रिकाया पृ ३।५२ सस्कारकौस्तुभ प ४७ पृ० १

( ) प्रयोगपारिजाते दत्तकमीमापुत्रमहार्णवे शौनकोक्तो लिखित ॥ तत्र वाक्य । दौहित्रो भागिनेयश्च

ऽप्येवम् ॥ एवं च निषादस्थपतिवत्तस्याधिकारे सिद्धे यच्छुद्धिविवेक उक्तम् वैदिकमन्त्रसाध्यहोमवति पुत्रपरिग्रहे[2] शूद्रस्यानधिकार इति तदपास्तम् ॥ समन्त्रहोमस्तु तेन विप्रद्वारा कार्य.। उपवासो व्रतं होमस्तीर्थस्नानजपादिकम्। विप्रैः सम्पादितं

---

शूद्रस्यापि च दीयत इति ॥ तत्र केचिच्छूद्रस्यैवेमौ द्वौ नान्यस्य ब्राह्मणादेरिति नियमं प्रतिपेदिरे । तन्न ॥ ब्राह्मणाय गां दद्यादित्यादाविव ब्राह्मणादेर्भूतभव्युपयोगाभावाद्गुणत्वेन विधेयत्वं नियमविधिविषयता युक्ता ॥ न त्विह शूद्रस्य सा युक्ता । भाव्युपयोगित्वाद्गुणत्वेनाविधेयत्वादविधेये च नियमविध्यसम्भवात् ॥ कथं शूद्रो भाव्युपयोगि इति चेत् उच्यते ॥ नापुत्रस्य लोकोऽस्ति जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यो विद्यया ऋषिभ्य इतिच श्रुतिः ॥ तत्र श्रुतै ब्राह्मणग्रहणमुपलक्षणमित्युक्तं ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगादित्यधिकरणे ॥ एवं च शूद्रस्यापि पितृऋणापाकरणविशिष्टत्वेन भाव्यत्वं चतुर्थ्यर्थश्च भवति ॥ यथा दण्डी प्रैषानन्वाहेति दण्डित्वेन प्रैषानुवचने मैत्रावरुणस्य विनियोगाद्भाव्युपयोगिनो मैत्रावरुणाय दण्डं प्रयच्छतीति दण्डितया भाव्यत्वं चतुर्थ्या ततश्च यथा तत्र दण्डस्य यजमानसंस्कारेण कृतकारस्यापि भाव्यत्वं त्यक्त्वा दण्डदानेन मैत्रावरुणं भावयेदिति वाक्यार्थे दण्डस्य विधेयत्वम् एवमिह पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुत इति सम्भवत्यपि पुत्रस्य भावे विनियोगत्वेन भाव्यत्वे तत्त्यक्त्वा भागिनेयदौहित्रदानेन शूद्रं भावयेदिति वाक्यार्थे दौहित्रभागिनेययोर्विधेयत्वेन तयोरेव नियमविधिविषयत्वं युक्तम् ॥ शूद्रस्य तु शेषितया तन्नियमे परिसङ्ख्यापत्तेः । यथा इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इति ॥ सा च त्रिदोषा ॥ न चैकत्र वाक्ये नियमपरिसङ्ख्ययोः सम्भवः ॥ तेन ब्राह्मणादिभिरपि दौहित्रभागिनेयौ पुत्रत्वेन ग्राह्याविति सिद्धम् ॥ तथा शूद्रेण सति सम्भवे दौहित्रभागिनेयावेव ग्राह्यौ ॥ ननु दौहित्रभागिनेयनियमाच्छूद्रस्य तद्व्यतिरिक्तो न स्यादेव अतः सति सम्भव इतीदमप्रमाणकम् ॥ तत्र केचित् ब्राह्मणस्य सोमविद्याप्रजमित्यधिकरणे प्रजोत्पादनस्य नित्यत्वोक्तेः पुत्रप्रतिनिधिविधेरपि भाव्याकाङ्क्षाया पुत्रशब्देनोपस्थितस्य तत्कार्यस्य पितृऋणापाकरणादेव प्रजोत्पादनफलस्य भाव्यत्वावगमे प्रजोत्पादनवदेव फलतो नित्यत्वेन यथाशक्तिन्यायाद्दौहित्रभागिनेयनियमानादरोऽपि युक्त इति ॥ तन्न । प्रयोगविधिप्रयोज्येष्वेवाङ्गेषु यथाशक्तिन्यायप्रवृत्तिरिष्टत्वात् ॥ अतश्च यत्प्रयोगविधिप्रयोज्यं प्रतिमहाङ्गं होमादि तस्यैव यथाशक्तिन्यायेन त्यागो न तु प्रयोगविध्यप्रयोज्यस्य दौहित्रत्वभागिनेयत्वादेः ॥ अत एव सजातीयेष्वथ प्रोक्तस्तनयेषु मया विधिरिति मनूक्तसजातीयत्वनियमस्यापि न त्यागः तस्मात्सति सम्भव इत्ययुक्तमिति ॥ अभिधीयते ॥ शौनकेनैव वैश्यानां वैश्यजातिषु शूद्राणां शूद्रजातिष्विति नियमनान्मनुनापि सजातीयेष्वथ प्रोक्तस्तनयेषु मया विधिरिति सजातीयत्वनियमनाद्दौहित्रत्वशूद्रत्वयोश्च परस्परव्यभिचारान्सामान्यविशेषभावाभावेनोपसंहारस्याप्ययोगाद्वैयर्थ्यपरिहारार्थं दौहित्रभागिनेयातिरिक्तशूद्रविधानार्थत्वे शूद्रवाक्यस्य निर्णीते दौहित्रभागिनेययोः पूर्वत्र एव प्रयत्नानामुक्तत्वा एव विप्रपदत्र नामनुत्रेरस्तरङ्गत्वात्सति सम्भवे तावेव ॥ तदसम्भवे तु शूद्रान्तरमपि पुत्रो भवत्येवेति ॥ एवं च न शिष्टाचारविरोधोऽपि कश्चिदिति सर्वं निरवद्यम् ॥ इति श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्यधरन्धरश्रीधरभट्टनारायणात्मजभट्टरामकृष्णसूरिभिः धर्मद्वैतनिर्णये पुत्रप्रतिनिधिसंज्ञायां तृतीयपरिच्छेद इत्युक्तम् ॥

सर्वशास्त्रतत्त्वज्ञकमलाकरभट्टेनापि स्वकृतनिर्णयसिन्धुटीकाया तृतीयपरिच्छेदे दत्तकप्रकरण इदमुपन्यस्तम् । तद्यथा ॥

भट्टास्तु शूद्रस्यैव दौहित्रभागिनेयौ द्वौ नेतरस्येति न नियमः ॥ यथा दण्डी प्रैषानन्वाहेति दण्डित्वेन प्रैषानुवचने मैत्रावरुणस्य विनियोगात् प्रैषानुवचनकर्तृत्वेन भाव्युपयोगिनो मैत्रावरुणस्यैव मैत्रावरुणाय दण्डं प्रयच्छतीत्यत्र दण्डितया भाव्यत्वं यजमानः स्वदण्डदानेन मैत्रावरुणं भावयेदित्यर्थात् । तथेहाप्यनपाकृतर्णत्वेन चतुर्थ्यर्थश्च्या दौहित्रभागिनेयदानेन शूद्रं भावयेदित्यर्थे ॥ एवं च दौहित्रभागिनेययोर्विधेयत्वेन नियमविधिविषयत्वं युक्तम् । शूद्रस्य तु शेषितया तन्नियमे परिसङ्ख्यापत्तेः । यथा इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते इति । सा च त्रिदोषेति ॥ तस्माद्दौहित्रभागिनेयावेव शूद्रस्य मुख्यौ तदभावे तु अन्योऽपि सजातीयः । शूद्राणां शूद्रजातिष्विति तेनैवोक्तेः ॥ न चेदं जातिपदं दौहित्रभागिनेययोरुपसंह्रियत इति वाच्यम् । तथा मन्येकस्मृतौ सामान्यवाक्यवैयर्थ्यापत्तेः ॥ एवं च ब्राह्मणादिभिरपि दौहित्रभागिनेयौ ग्राह्यौ बाधकाभावादिति वदन्ति ॥

(१) जैमिनिकृतपूर्वमीमांसाया षष्ठाध्याये प्रथमपादे स्थपतिर्निषादः स्याच्छब्दसामर्थ्यादिति सूत्रे (५१) निषादस्थपतिन्यायो द्रष्टव्यः ॥

(२) प्रतिपदे (क) (ख) (घ) (ङ) (छ) •

यस्य सम्पन्ने तस्य तत्फलमिति पराशरोक्तेः ॥ स्मार्तहरिनाथाप्येवमेव ॥ यत्तु पराशर एव दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धवि. । ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेदिति तत्तु शूद्रकर्मसाद्गुण्यं विप्रस्य दोषं प्रतिपादयतीति माधव.॥

स्त्रिया अपि शूद्रवदेवाधिकारः । स्त्रीशूद्राश्च सधर्माण इति वाक्यात् ॥ वसिष्ठः । 5 शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि त्रायते पुरुषं न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि च निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरेबान्धवं सन्निकृष्टमेव गृह्णीयात्[1] सन्देहे चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेत् विज्ञायते ह्येकेन बहूंस्त्रायेदिति तस्मिं-10 श्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्यादिति[2] ॥ भर्त्रनुज्ञा तु सधवाया एव दृष्टार्थत्वात् ॥ विधवायास्तु ता विनापि पितुस्तदभावे ज्ञातीनामाज्ञया भवति ॥ अत एव रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके । अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रिया इति याज्ञवल्क्येन (आ० श्लो० ८५) अवस्थाविशेष एव भर्तुं पारतन्त्र्यमुक्तम् ॥ तदभावे वार्धकादिना तस्याऽक्षमताया वा पुत्रादीनामपि ॥ कात्याय-15 नेनाऽपि नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन वा । विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदैहिकमित्यवस्थाविशेष एव पितृभर्त्राद्यनुज्ञोक्ता ॥ और्ध्वदैहिकं पारलैकिकम् ॥ अतो यस्यामवस्थायां भर्त्रनुज्ञा प्राप्ता सैवात्राऽनूद्यते न त्वपूर्वा विधीयते ॥[3] अतो विधवाया भर्तुराज्ञां विनाप्यधिकार ॥

अदूरेबान्धवो यथायथं सन्निहितः सपिण्डः ॥ सन्निहितेष्वपि भ्रातृपुत्रो मुख्य । 20 भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति मनूक्ते[4] (अ० ९ श्लो० १८२) रिति मिताक्षरायाम् ॥ इदमेव चैतद्वचसः प्रयोजनं युक्तम् । अन्यासम्भवात् ॥ दूरेबान्धवं विजातीयम् ॥

दत्तकस्तु परिणीत उत्पन्नपुत्रोऽपि च भवतीति तातचरणाः ॥ युक्तं चेदं बाधकाभावात् ॥ यत्तु कालिकापुराणे पितुर्गोत्रेण यः पुत्र संस्कृत. पृथिवीपते । 25 आचूडान्तं न पुत्र स पुत्रतां याति चान्यत ॥ चूडोपनयनसंस्कारा निजगोत्रेण वै कृताः । दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥ ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप । गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेदिति[5] तदसगोत्रपरम् ॥ आचूडान्तमित्याङभिव्याप्त्यर्थः । मर्यादार्थत्वे चूडोपनयनसंस्कारा इत्यनेन विरोधापत्तेः ॥ इदं तु वचो न तथा विस्रम्भणीयम् द्वित्रिकालिकापुराणपुस्तकेष्वदर्शनात्[6] ॥

---

(१) अदूरबान्धवं बन्धुसन्निकृष्ट एव प्रतिगृह्णीयादिति पाठ मिताक्षरायां वीरमित्रोदये च।

(२) पुत्र प्रतिग्रहीष्यन्नित्यादि सन्निकृष्टमेव गृह्णीयादित्यन्त मि० व्य० पृ० ६६ पृ० १ वी० पृ० १८९ पृ० २, क० वि०, व्य० भा०

(३) मि० पृ० ६६ पृ० १, वी० पृ० १८८ पृ० २, क० वि, व्य० भा०

(४) क० वि०

(५) सर्वपुस्तकेषु 'द्विवि' इत्येव पाठो दृश्यते 'द्वित्रि' इति तु साधु भासत इति तदेव मूले निवेशितम्

(६) संस्कारकौस्तुभे पृ० ४५ पृ० २,

तस्य द्वैविध्यम् ।

अथ च दत्तको द्विविधः ॥ केवलो द्व्यामुष्यायणश्च ॥ संविदं विना दत्त आद्य ॥ आवयोरयमिति संविदा दत्तस्त्वन्त्य ॥ तत्राद्य प्रतिग्रहीतुरेवौर्ध्वदेहिकश्राद्धादि कुर्यात् ॥ तथाहि पुत्रप्रतिग्रहस्य भाव्याकाङ्क्षायां पुत्र प्रतिग्रहीष्यन्नित्यादिके तद्विधौ पुत्रमिति द्वितीयान्तेन पुत्रस्य भाव्यत्वमुक्तम् ॥ न च जन्यपुत्रवास्य पुत्रत्व भावयितु शक्यम् ॥ तेन पुत्रशब्देन सर्वं पुत्रकार्यं लक्षयित्वा तत्प्रयोजकमदृष्ट भाव्यमङ्गीकर्त्तव्यम् ॥ अत प्रतिग्रहीतृकुले पुत्रपित्रादिसम्बन्धविशेषप्रयुक्तानि कार्याणि प्रवर्तन्ते ॥ अत एवाह मनु (अ० ९ श्लो० २४२)। गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिम सुत । गोत्ररिक्थानुग पिण्डो व्यपैति ददत स्वधा ॥ गोत्ररिक्थेऽनुगच्छतीति गोत्ररिक्थानुग प्रायस्त्त्समानियत इति यावत् । दत्त्रिम केवल द्व्यामुष्यायणे गोत्राद्यनुवृत्तेर्वक्ष्यमाणत्वात् ॥ 10 पिण्ड श्राद्धमौर्ध्वदेहिकादीति मेधातिथिकुल्लूकभट्टादय[1] ॥ पिण्ड सापिण्ड्यम् स्वधौर्ध्वदेहिकश्राद्धादीत्यपरे ॥ वस्तुतस्तु यथा जातपुत्र कृष्णकेशोऽग्नीनादधीतेत्यत्र व योऽवस्थाविशेष यथा वार्धमन्तर्वेदिमिनोत्यर्धं बहिर्वेदीत्यनेन देशविशेषो लक्ष्यते तथात्र गोत्ररिक्थपिण्डस्वधापदैर्जनकादीनां पिण्डसम्बन्धप्रयुक्त कार्यमात्र लक्षयित्वा तन्निवृत्तिरुच्यते ॥ तेन सोदरपितृव्यादिसम्बन्धनिवृत्तिरपि सिद्धा भवति ॥ अत एव केवल 15 दत्तकजन्य पुत्रोऽपि पितु सपिण्डीकरणपार्वणश्राद्धादि प्रतिग्रहीत्रैव सह कुर्यात् ॥ एव तत्पुत्रोऽपि ॥ यत्तु अथ चेद्दत्तकक्रीतपुत्रिकापुत्रा परपरिग्रहेणानार्षेयास्ते द्व्यामुष्यायणा भवन्तीत्यादिना द्व्यामुष्यायणानुपक्रम्य कात्यायन अथ यद्येषा स्यात्तु भार्यास्व पत्न न स्याद्रिक्थ हरेयु पिण्ड चैभ्यस्त्रिपुरुष दद्युरथ यद्युभयोर्न स्यादुभाभ्या दद्युरेकस्मिञ्छ्राद्धे पृथगुद्दिश्य द्वावनुकीर्तयेत् प्रतिग्रहीतार चोत्पादयितार चातृतीयात्पुरुषादिति तद्द्व्यामुष्यायणपरम् । द्व्यामुष्यायणा भवन्तीत्युपक्रमात् ॥ तेन द्व्यामुष्यायणो जनकस्य प्रतिग्रहीतुर्वा पुत्रान्तरासत्त्वे तस्मै पिण्ड दद्यात् रिक्थ च गृह्णीयात । न तत्सत्त्वे ॥ यदा तूभयोरप्यौरसा पुत्रा सन्ति तदा कस्मा अपि न दद्यात् प्रतिग्रहीत्रौरसांशस्य चतुर्थं भाग च हरेत् । तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्यादिति वसिष्ठोक्ते[2] । उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहरा सुता । सवर्णा अस 25 वर्णास्तु ग्रासाच्छादनभागिना इति कात्यायनोक्तेश्च ॥ तृतीयांशहरा इति कल्पतरौ पाठ । सवर्णा क्षेत्रजदत्तकादय इति विज्ञानेश्वर[3] ॥ यदा तूभयो पुत्राभावस्तदैकस्मिञ्छ्राद्ध इत्याद्युक्तप्रकारेणोभयोरप्येकमेव श्राद्ध कुर्यात् ॥ यदपि हेमाद्रौ कार्ष्णाजिनि यावन्त पितृवर्गा स्युस्तावद्भिर्दत्तकादय । प्रेतानां योजन कुर्यु स्वकीयै पितृभि सह ॥ द्वाभ्यां सहाय तत्पुत्रा पौत्रास्त्वेकेन तत्समम् । चतुर्थे पुरुषे छन्दस्त 30

---

(१) मि० प० ६६ पृ० १ वी० प० १९६ पृ० १ क० वि०, व्य० मा०

(२) मनु प० १६६ पृ० १ टीका (अ० ९ श्लो० १४२)

(३) प्रीनां इति वीरमित्रोदये पाठ प० १९० पृ० १

(४) क० वि०

(५) मि० व्य० प० ६६ पृ० २ वी० प० १९० पृ० २ क० वि०

(६) मि० व्य० ६६ पृ० १

स्मादेषा त्रिपौरुषी ॥ साधारणेषु कालेषु विशेषो नास्ति वर्गिणाम् । मृताहे लेकमुद्दिश्य कुर्युः श्राद्धं यथाविधीति तदपि कात्यायनीयसमानार्थमेव ॥ अयमर्थः द्व्यामुष्यायणदत्तकादयो जनकप्रतिग्रहीत्रोः कुले मृतानां स्ववर्गैस्तत्पित्रादिभिः सह सपिण्डीकरणं कुर्युः दत्तकादिपुत्रास्तु तेषां जनकप्रतिग्रहीतृभ्यां सह कुर्युः तत्पौत्रा अपि स्वपितरं
5 दत्तकेन पितामहेन तज्जनकेन प्रपितामहेन चतुर्थे पुरुषे तत्प्रपौत्रे छन्द इच्छा प्रतिग्रहीतारमुच्चारयेन्नेति जनकं तूच्चारयेदेव • साधारणेष्वमावास्यादिकालेषु जनकप्रतिग्रहीतृवर्गिणा श्राद्धं कार्यम् मृताहे लेकमेवोद्दिश्यैकोद्दिष्ट श्राद्ध कुर्यादिति ॥ केचित्तु केवलदत्तकस्याविधानात्स नास्त्येव आवयोरसाविति संविदश्च विधानाभावात्ता विना गृहीतोऽपि द्व्यामुष्यायण एव तेनैव च जनकप्रतिग्रहीत्रोरुद्देशेनामा-
10 वास्यादिषु श्राद्धद्वयमेकं वा श्राद्धं कार्यम् । तत्पुत्रेण तु दत्तकस्य तज्जनकप्रतिग्रहीतृभ्यां द्वाभ्यामपि सह सपिण्डीकरणपार्वणश्राद्धादि कार्यम् एवं तत्पुत्रादिभिरपीत्याहुः तच्चिन्त्यम् ॥ यद्यपि केवलदत्तक क्वापि शब्दतो नोक्तस्तथापि पूर्वोक्तमनुवचनेन जनकादीनां सम्बन्धमात्रनिवृत्तेरुक्तत्वात् द्व्यामुष्यायणे तदभावादर्थात्सिध्यत्येव ॥ किंच । ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्य पञ्चमादिति गौतमीयेन
15 बीजिकुले सप्तपुरुष यावद्विवाहो निषिद्ध ॥ द्व्यामुष्यायणे व्यर्थः स्यात् । तस्मिन्सापिण्ड्यसत्त्वात् ॥ अतोऽवश्यमेतत्सार्थक्यार्थं केवलदत्तको वाच्य । तत्र सापिण्ड्यनिवृत्तेरुक्तत्वात् ॥ अपि च प्रवराध्याये । द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादय । गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथेति ॥ एतेन गोत्रद्वयं द्व्यामुष्यायणस्योक्तम् मानवीयेन च जनकगोत्रनिवृत्तिरुक्तेति विरोधः केवलद्व्यामुष्यायणभेदेनैव परिहर-
20 णीय ॥ तेन सिध्यत्येव केवलोऽपि दत्तक ॥ अत एव शूरेण कुन्तिभोजाय दत्तिमत्वेन दत्ताया कुन्त्या सुतस्यार्जुनस्य शूरपुत्रवसुदेवदुहितुः सुभद्रायाः सापिण्ड्यनिवृत्तिं मनुवचनेनोक्त्वाऽस्य गौतमीयस्य बीजसन्तानजाया अपि निषेधमात्रपरत्वमेव योक्त्वा ऽर्जुनेन न सा सुभद्रा परिणेयेत्याशङ्क्य वार्त्तिकोक्तं सम्बन्धव्यवधानकल्पनाख्यं समाधानमाह भट्टसोमेश्वर ॥ यत्तु कश्चित्सोमेश्वरेण गौतमवचनात्कुन्त्याः शूरकुलेऽपि
25 साप्तपौरुषं सापिण्ड्यमुक्तमित्याह तद्ग्रन्थानध्ययननिबन्धनम् ॥ तेन हि सापिण्ड्यनिवृत्तिं पूर्वमुक्त्वा गौतमीयस्य जनककुले निषेधपरत्वमुक्तम् न तु सापिण्ड्यबोधकत्वम् ॥ एवं सिद्धे केवले द्व्यामुष्यायणे चावयोरसाविति संविदपि सिध्यति । प्रतिग्रहीतुर्द्व्यामुष्यायणत्वानार्थत्वेन दृष्टार्थत्वात् ॥ अत्र च केवलदत्तकस्य पालकपितृकुले साप्तपौरुषं मातृकुले च पाञ्चपौरुषं सापिण्ड्यम् ॥ यत्तु वृद्धगौतमः स्वगोत्रेण कृता ये स्युर्द-
30 त्तक्रीतादय सुता । विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते ॥ यच्च बृहन्मनुः दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । पञ्चमी सप्तमी चैव गोत्रित्वं पालकस्य च ॥

---

(१) दत्तकमीमांसा पृ० १४, दत्तकचन्द्रिका पृ० ५८

(२) दत्तकमीमांसा पृ० १९

(३) 'निषिद्ध स्याद् वृथा' इति पाठो बहुषु पुस्तकेषु दृश्यते। परंतु मो मू.े लिखित. । एव साधुरिति भाति

(४) इदं वचनं 'इति गोविन्दभट्टकृत-टीकारत्नमालायाम्

यदपि नारद धर्मार्थे गर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् । अप्रापिण्डविभागित्व तेषु केवलमिष्यत इति तान्यनाकराणि ॥ साऽऽकरत्वेऽपि द्व्यामुष्यायणस्य प्रतिग्रहीतृकुले साप्तपौरुषसापिण्ड्याभावप्रतिपादनार्थम् । केवलदत्तके पूर्वोक्तगौतमीयेन पालककुले साप्तपौरुषसापिण्ड्यस्योक्तत्वात् । मानवीयेन च जनककुले सापिण्ड्यनिवृत्तेरुक्तत्वात् ॥ यत्तु सापिण्ड्यनिर्णये केषाचिन्मान्यानां लेख जनकगोत्रेणोपनयनादिसंस्कृतस्य तु जनककुले पितृतो मातृतश्च पाञ्चपौरुष साप्तपौरुष च सापिण्ड्यम् प्रतिग्रहीतृ कुले त्रिपुरुष प्रतिग्रहीतरि पितृत्वप्रयोजकस्योत्पादकत्वस्योपनेतृत्वस्य चाभावात् प्रतिग्रहीतृगोत्रेण सस्कृतस्य तु प्रतिग्रहीत्रादिभिरेव साप्तपौरुष पाञ्चपौरुष चेति तस्य मूल न विद्म ॥ किंच । यदि प्रतिग्रहीतर्युत्पादकत्वोपनेतृत्वाद्यभावान्न पितृत्व कथ तर्हि त्रिपुरुष सापिण्ड्य प्रतिग्रहीत्रादिश्राद्धादिकर्तृत्व वा दत्तकस्य ॥ नच पितृत्व 10 सापिण्ड्यसमनियत येन तदभावात्सापिण्ड्याभाव स्यात् ॥ वस्तुतस्तु ऊर्ध्वं सप्तमा-त्पितृबन्धुभ्य इति गौतमादिवचने प्रतिग्रहीत्रादिभि सह सापिण्ड्य पूर्वमुक्तमेवेति दिक् ॥

अथ पुत्रदानप्रतिग्रहविधि ॥ तत्रानेकपुत्राणामज्येष्ठदान एवाधिकार सर्वषाम् । प्रतिग्रहे त्वजातपुत्राणां मृतपुत्राणां वा । स्त्रीणा सधवाना भर्तुरनुज्ञया भर्त्रभावे पित्रा- 15 दीनाम् ॥ शूद्राणां दौहित्रो भागिनेयो वा ग्राह्यो नान्य ॥ अन्यैस्तु सन्निहित सपिण्ड तदभावे विप्रकृष्टो न त्वन्यजातीय इति ॥ अत्र दाता प्रतिग्रहदिने कालादि स्मृत्वा ऽस्मदादीनामस्य च पुत्रस्य वर्तमानपितृपुत्रादितत्तत्सम्बन्धनिमित्तकतत्तत्का-र्यनिवृत्तये प्रतिग्रहीत्रादीनामस्य च परस्पर पितृपुत्रादितत्तत्सम्बन्धनिमित्तकतत्तत्कार्य-प्रवृत्तये च पुत्रदान करिष्य इति सङ्कल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धि- 20 श्राद्धादि कुर्यात् ॥ प्रतिग्रहीता तु प्रतिग्रहदिनपूर्वदिने उपोष्यापरदिने बन्धूनाहूय पुत्रप्रतिग्रह राज्ञे निवेद्य कालादि स्मृत्वा ग्रहीष्यमाणपुत्रस्य तज्जनकादीनां च पर-स्पर वर्तमानपितृपुत्रादितत्तत्सम्बन्धनिवृत्तये ऽस्मदादीनां च परस्पर पितृपुत्रादितत्त-त्सम्बन्धनिमित्तकतत्तत्कार्यप्रवृत्तये च पुत्र प्रतिग्रहीष्य इति सङ्कल्प्य गणेशपूजास्वस्ति-वाचनमातृकापूजावृद्धिश्राद्धाचार्यवरणकुण्डलाङ्गुलीयकवासोयुगलोष्णीषमधुपर्काद्या- 25 चार्यपूजनानि सङ्कल्पपूर्वक कृत्वा त्रीन्विप्रान्बन्धूश्च भोजयेत् ॥ अथ आचार्य स्वकर्म करिष्य इति सङ्कल्प्य स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठापनान्त कृत्वाऽन्वाधाने चक्षुषी आज्येनेत्यन्तमुक्त्वाऽत्रप्रधानमग्निं वायु सूर्यं प्रजापतिं चैकैकयाहुत्या अग्निमेकया सूर्या-सावित्री च षड्भिश्चर्वाहुतिभिर्यक्ष्ये शेषेण स्विष्टकृतमित्याद्याज्योपवनान्त कुर्यात्। अथ प्रतिग्रहीता दातृनिकटे गत्वा पुत्र देहीति याचयेत ॥ दाता तु येयजेति क्र- 30 वपञ्चकमुक्त्वा कालादि स्मृत्वा ऽस्मदादीनामित्यादि प्रवृत्तय इत्यन्तमुक्त्वाऽमु पुत्र यथा-

(१) अत्र 'मुख्यपितृत्व' इति पाठ साधुर्भा सते।

(२) अत्र संस्कारकौस्तुभो द्रष्टव्य पृ० ४९ पृ० १

(३) शूद्राणामित्यत्र सति सम्भव इति शेषो बोध्य पूवाक्तनिर्णयानुसारात् (पृ० ४० पं० २६ )

(४) ऋक्संहिता अष्टक ॥ अ० २ वर्ग ६, ऋ० १

वासत्पलङ्कृतं तुभ्यमहं संप्रददे इति वदेत् ॥ येयज्ञेनेति पञ्चानां मानवपुत्रो नाभानेदिष्टो विश्वेदेवा जगती पुत्रदाने विनियोगः॥ प्रतिग्रहीता तु देवस्यत्वेत्यनेन प्रतिगृह्य स्वशाखोक्तां कामस्तुतिं पठित्वाऽङ्गादङ्गादित्यृचं जपित्वा पुत्रं मूर्धन्याघ्राय वस्त्रादिभिरलङ्कृत्य मंगलशब्दैर्गृहान्तर्नयेत्॥ अथाचार्य आज्यस्थापनाद्याज्यभागान्तं कृत्वाऽग्ने-
5 नैव व्यस्तसमस्तव्याहृतिभिर्हुत्वा चरुणा जुहुयात् ॥ यस्त्वाहृदा वसुश्रुतोऽग्निस्त्रिष्टुप् पुत्रप्रतिग्रहप्रधानचरुहोमे विनियोगः ॥ यस्त्वाहृदा॰ अग्नय इदं नममेति त्यागः ॥ तुभ्यमग्र ईळस्य सूर्यासावित्री सूर्यासावित्र्यनुष्टुप् । तुभ्यमग्रे॰ सूर्यासावित्र्या इदं नमम ॥ सोमोददिति पञ्चानां सूर्यासावित्री सूर्यासावित्र्यनुष्टुप् ॥ विनियोगः प्राग्वत् । सोमोददत् ततः स्विष्टकृदादि समापयेदिति विधिः ॥

10 प्रकृतमनुसरामः ॥ ऋणविभागे विशेषमाह कात्यायनः । पित्र्यं पितृपर्णसम्बन्धमात्मीयं चात्मना कृतम् । ऋणमेवकृतं शोध्यं विभागे बन्धुभिः सह ॥ पितृपर्णसम्बन्धं पितुर्ऋणापाकरणार्थं कृतम् । आत्मीयं स्वकुटुम्बभरणाद्यर्थमन्येन कृतम् ॥ स एव । भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् । विभागकाले देयं तद्रिक्थिभिः सर्वैमेव तु ॥ रिक्थादत्तर्णविषयेऽपि स एव ॥ ऋणं प्रीतिप्रदत्तं तु दत्त्वा शेषं विभा-
15 जयेत् ॥ प्रदत्तं प्रतिश्रुतम् ॥ नारदः । यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं च यत् । भ्रातृभिस्तद्विभक्तव्यमृणी स्यादन्यथा पिता ॥ पितृदायः पित्रा प्रतिश्रुतम् ॥ स एव । धर्मार्थं प्रीतिदत्तं च यदृणं स्वेन योजितम् । तद्दृश्यमानं विभजेन्न दानं पैतृकाद्धनात् ॥ धर्मार्थं प्रीत्या च यद्दत्तं दातुं प्रतिश्रुतम् । पित्रा स्वेन योजितं स्वयं कृतम् । तदृणं दृश्यमानं च द्रव्यं विभजेत् ॥ एतदृणातिरिक्तस्य पैतृकाद्धनाद्दानं नास्तीत्यर्थः ॥ अदृ-
20 श्यमानशङ्कायामपि स एव ॥ दृश्यमानं विभज्येत गृहक्षेत्रं चतुष्पदम् । गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्तितः ॥ गृहोपस्करवाह्याश्च दोह्या भरणकर्मिणः ॥ दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीन्मनुः ॥ कर्मिणो दासादयः । अत एव दिव्यप्रकरणेऽस्मिन्विषये कोश एव नियमितस्तेनैव ॥ शङ्का विश्वाससन्धाने विभागे रिक्थिनां सदा । क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेदिति ॥

25 ## ॥ अथाविभाज्यम् ॥

अविभाज्यम् ।

मनुः (अ॰ ९ श्लो॰ २०६) । विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् । मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥ व्यासः । विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् । विभागकाले तत्तस्य नान्वेष्टव्यं

---

(१) तैत्तिरीयारण्यके तृतीयेऽध्याये दशमानुवाके
(२) आश्वलायनश्रौतसूत्रपूर्वषट्के अ॰ ९ क॰ १३ सू॰ १५ (पृ॰ ४३१)
(३) ऋक्संहिता अष्टक ८ अ॰ ८ व॰ २६ ऋ॰ ६.
(४) तैत्तिरीयसंहितायां प्रथमकाण्डे चतुर्थस्यान्तिमानुवाके.
(५) ऋक्संहिताया अष्टक ८ अ॰ १ व॰ २७ ऋ॰ १.
(६) ऋक्संहिताया अष्टक ८ अ॰ ३ व॰ २८ ऋ॰ १.
(७) अत्रापि सूर्यासावित्र्या इद नममेत्येव त्याग इति वेदितव्यम् (संस्कारकौस्तुभ पृ॰ ४८ पृ॰ २).

स्वारिक्थिभिः ॥ सौदायिकं वक्ष्यते । एतच्च पितृद्रव्याविरोधेनार्जितं ज्ञेयम् ॥ तथाच याज्ञवल्क्यः (व्य० श्लो० ११८।११९) । पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् । मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥ क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः । दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ क्रमागतायामुद्धृतायां भुवि विशेषमाह शङ्खः । पूर्वनष्टां तु यो भूमिमेकश्चेदुद्धरेत्क्रमात् । यथाभागं लभन्तेऽन्ये दत्त्वांशं तु तुरीयकम् ॥ उद्धृतायाश्चतुर्थमंशमुद्धर्त्रे दत्त्वावशिष्टमुद्धर्त्रा सह विभजेयुः ॥ मनुः (अ० ९ श्लो० २०८) । अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत् । दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ व्यासः । अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम् । दायादेभ्यो न तद्दद्याद्विद्यालब्धं च यद्धनम् ॥

क्रमायातायां भुवि ।

विद्यालब्धं विशिनष्टि कात्यायनः । परभक्तोपयोगेन विद्या प्राप्ताऽन्यतस्तु या । तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥ एतदेव विशदयति स एव । उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् । विद्याधनं तु तद्विद्याद्विभागे न विभज्यते ॥ शिष्यादार्त्विज्यतः प्रश्नात्संदिग्धप्रश्ननिर्णयात् । स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥ विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते । शिल्पिष्वपि हि धर्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥ विद्यालब्धं कृतं चैव प्राज्यतः शिष्यतस्तथा । एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥ परं निरस्य यल्लब्धं विद्यया पणपूर्वकम् । विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥ विद्याप्रतिज्ञया लब्धं शिष्यादाप्तं च यद्भवेत् । आर्त्विज्यन्यायेन यल्लब्धमेतद्विद्याधनं भृगुः ॥ उपन्यासः क्रमजटादीनां सङ्कलितानां पाठ इति मदनरत्ने । सभायां गूढप्रमेयविवृतिरिति केचित् । पणपूर्वकमुपन्यस्त इत्यन्वयः । शंसनं प्रख्यापनम् । प्राध्ययनं प्रकृष्टाध्ययनम् । शिल्पिष्वपीति अयं विद्याधर्मः शिल्पिष्वपि ज्ञेय इत्यर्थः । मूल्याधिकं पारितोषिकम् । आर्त्विज्यन्याय उपदर्शनम् । अत्र सर्वत्रापि विद्याधिगमे तया द्रव्यार्जने च पितृद्रव्याविरोधे सत्येवाविभाज्यत्वं विरोधे तु विभाज्यमेव ॥ अत एव कात्यायनः । कुले विनीतविद्यानां भ्रातृणां पितृतोऽपि वा । शौर्यप्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥ पितृद्रव्यविरोधेऽप्यभक्तस्याशद्वयमस्त्येव । येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव हरेदिति वासिष्ठोक्तेः ॥ कस्मिंश्चिद्विद्याधने विशेषमाह नारदः । कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः । भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन् ॥ अश्रुतोऽविद्य इति मदनरत्ने । भागं दास्यामीत्यप्रतिश्रुत इति तु युक्तम् ॥

पितृद्रव्याविरोधार्जिते विशेषमाह गौतमः । स्वमार्जितं वैद्यो वैद्येभ्यः कामं दद्यादिति ॥ विद्यां वेत्तीति वैद्यः । स इच्छया विद्वद्भ्यो भ्रातृभ्यो दद्यादित्यर्थः ॥ कात्यायनः ।

(१) ई० प० ११० पृ० १, क० वि० ध्य० भा०
(२) मि० व्य० प० ४८ पृ० १ ई० प० ११० पृ० २ क० वि० व्य० भा०
(३) मि० व्य० प० ५० पृ० १ ई० प० ११० पृ० २ क० वि० व्य० भा०
(४) क० वि०
(५) मि० व्य० प० ५० पृ० १, ई० प० ११० पृ० २ क० वि०, व्य० भा०
(६) क० वि० व्य० भा०
(७) मि० व्य० प० ५० पृ० १ ई० प० ११० पृ० २
(८) [illegible] इति पाठः कमलाकरभट्टे

नाविद्यानां तु वैद्येन देयं विद्याधनं क्वचित् । समविद्याधिकानां तु देयं वैद्येन तद्भवेत् ।
वैद्यो वैद्याय नाकामो दद्यादंशं स्वतो धनात् । पितृद्रव्यं समाश्रित्य न चेत्तेन तदाहृ-
तम् ॥ अयं च निषेधो विद्यमानभ्रातॄणां धनान्तरसत्त्वे ॥ धनान्तराभावे तु तेभ्योऽपि देय-
मेवेति मदनः ॥ पित्रादिदत्तस्याविभाज्यत्वमाह बृहस्पतिः । पितामहपितृभ्यां च दत्तं
5 मात्रापि यद्भवेत् । तस्य तन्नापहर्तव्यं शौर्यभार्याधने तथा ॥ नारदः । शौर्यभार्याधने
चोभे यच्च विद्याधनं भवेत् । त्रीण्येतान्यविभाज्यानि प्रसादो यश्च वै पितुः ॥ कात्या-
यनः । ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् । सङ्ग्रामादाहृतं यच्च विद्राव्य
द्विषतां बलम् ॥ स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते ॥ स एव । आरुह्य सं-
शयं यत्र प्रसभं कर्म कुर्वते । तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥ तत्र
10 लब्धं तु यत्किञ्चिद्धनं शौर्येण तद्भवेत् ॥ अत्र विशेषमाह व्यासः । साधारणं स-
माश्रित्य यत्किञ्चिद्वाहनादिकम् । शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः ॥ सौदायिकस्वरूपमाह व्यासः । ऊढया
कन्यया वापि पत्युः पितुर्गृहादपि । भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
कात्यायनः । यल्लब्धं लग्नकाले तु स्वजात्या कन्यया सह । कन्यागतं तु तद्वित्तं शुद्धं
15 वृद्धिकरं स्मृतम् ॥ वैवाहिकं तु तद्विद्याद्भार्यया यत्सहागतम् । धनमेवंविधं सर्वं विज्ञेयं
धर्मसाधनम् ॥ आदायार्षस्तु गोद्वयमिति प्रकारेण लब्धं कन्यागतम् ॥ अत्रापि
विद्याधनवदेव पितृद्रव्याविरोधश्चेदविभाज्यत्वम् । विद्यादिव्यतिरिक्तप्रकारेण तु लब्धं
विभाज्यमेव ॥ तथा च मनुः (अ० ९ श्लो० २०५) । अविद्यानां तु सर्वेषामीहातश्चे-
द्धनं भवेत् । समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥ ईहा कृष्यादिचेष्टा ।
20 अपित्र्ये पितृद्रव्यानाश्रयणे ॥ अन्यदप्यविभाज्यमाह मनुः (अ० ९ श्लो० २१९)
वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः । योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥
पत्रं वाहनम् । वस्त्रपत्रालङ्कारा ये येन धृतास्ते तस्यैव सममूल्याश्चेत् । न्यूनाधिक-
मूल्यास्तु विभाज्या एव ॥ पितृधृतं तु वस्त्रादि तच्छ्राद्धभोक्त्रे देयम् ॥ वस्त्रालङ्कार-
शय्यादि पितुर्यद्वाहनादिकम् । गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेदिति
25 बृहस्पत्युक्तेः ॥ विषमेष्वजादिषु विशेषमाह मनुः (अ० ९ श्लो० ११९) । अजाविकं
सैकशफं न जातु विषमं भजेत् । अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते ॥ कृतान्नो-
दके यथासम्भवमुपयोज्ये । स्त्रियो दास्यो विषमा यथासम्भवं कर्म कारणीयाः ।
समास्तु विभाज्याः । पित्रवरुद्धास्तु समा अपि न विभाज्याः । स्त्रीषु च संसक्तास्वविभाग इति गौतमोक्तेः ॥ योगक्षेमशब्देन मन्त्रिपुरोहितादय उच्यन्ते इति कल्प-

(१) क० वि०; व्य० मा०.
(२) मि० व्य० प० ४० पृ० २, क० वि० व्य० मा०.
(३) 'पितृगृहेऽपि वा' इति वीरमित्रोदये पाठः। 'भर्तुः सकाशात्' इति कल्पतरौ पाठ इत्यपि तत्रैव
(४) वी० प० २१६ पृ० १; क० वि०, व्य० मा०
(५) मि० आ० श्लो० ११ (प० ८ पृ० १ )
(६) क० वि०
(७) मि० व्य० प० ५० पृ० २, वी० प० २११ पृ० १; क० वि०; व्य० मा०.
(८) मि० व्य० प० ५० पृ० २, वी० प० २११ पृ० १.
(९) मि० व्य० प० ५० पृ० २; क० वि०.
(१०) 'प्याजकदासु न' इति वीरमित्रोदये पाठः
(११) वी० प० २११ पृ० १; मि० व्य० प० ५० पृ० १; क० वि०, व्य० मा०.

तरौ ॥ लौगाक्षिस्तु क्षेम पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिन । अविभाज्ये तु ते प्रोक्ते शयनासनमेव च इत्याह ॥ तत्र पूर्तं तडागारामादि । इष्ट यागविप्रभोजनादि । तदर्थमविभागदशायां सर्वानुमत्या यद्द्रव्य येनोत्सृज्य पृथक् स्थापित तेन द्रव्येण स धर्मस्तेनैव कार्यो नान्येन नवा सम्भूय सर्वैरित्यर्थ । प्रचारो गृहादिमार्ग गवादि प्रचारार्था भूश्च ॥ यत्तु शङ्खलिखितौ न वास्तुविभागो नोदपात्रालङ्कारोपयुक्तवास 5 सामिति ॥ यच्च व्यास अविभाग सगोत्राणामासहस्रकुलादपि । याज्य क्षेत्र च पत्र च कृतान्नमुदक स्त्रिय इति वास्तुक्षेत्रयोरविभाज्यत्वमाह तद्धर्मवास्तुगोप्रचारक्षेत्रादिपरम । प्रतिग्रहोपात्तयोस्तयो क्षत्रियादिविभागप्रतिषेधपरम पूर्वोक्तनिषेधात् ॥ अल्पमूल्ययोर्मूल्येन विभागो न स्वरूपत इत्येवम्पर वा ॥ वस्त्रादिषु विशेषमाह बृहस्पति । वस्त्रादयो अविभाज्या यैरुक्त तैर्न विचारितम् । धन भवसमृद्धानां 10 वस्त्रालङ्कारसंश्रितम ॥ मध्यस्थितमनाजीव्य दातु नैकस्य शक्यते । युक्त्या विभजनीय तदन्यथा ऽनर्थक भवेत् ॥ विक्रीय वस्त्राभरणमृणमुद्ग्राह्य लेखितम् । कृतान्नचाकृतान्नेन परिवर्त्य विभज्यते ॥ उद्धृत्य कूपवाप्यम्भ स्वानुसारेण भुज्यते । एका स्त्री कारयितव्या कर्म यथांशेन गृहे गृहे ॥ बहव समाशतो देया दासानामप्यय विधि । यथाभागाऽनुसारेण सेतु क्षेत्र विभज्यते ॥ प्रचारश्च यथांशेन कर्तव्यो रिक्थिभि 15 सदेति ॥ उद्ग्राह्येति अधमर्णादुद्धृत्येत्यर्थ ॥ कात्यायन । धन पत्रनिविष्ट तु धर्मार्थं यन्निरूपितम् । उदक चैव दासश्च निबन्धो य क्रमागत ॥ धृत वस्त्रमलङ्कारो नानुरूप तु यद्भवेत् । यथा कालोपयुक्तानि तथा योज्यानि बन्धुभिरिति ॥ धनमिति धर्मार्थेनोत्सृज्य पत्रे लिखितमित्यर्थ । उदक कूपादिगतम । निबन्धो वृत्ति । नानुरूप विभागायोग्यम् ॥ 20

भ्रात्रादिवञ्चनया स्थापितद्रव्यस्य विभागमाह याज्ञवल्क्य (व्य० श्लो० १२६) । अन्योन्यापहृत द्रव्य विभक्ते यत्तु दृश्यते । तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थिति ॥ अन्योन्यापहृत ज्येष्ठकनिष्ठाद्यपहृतम् ॥ यत्तु मनु (अ० ९ श्लो० २१३) यो लोभाद्वि निकुर्वीत ज्येष्ठो भ्रातॄन्यवीयस । सो ऽज्येष्ठ स्यादभागश्च नियन्तव्यश्च राजभिरिति ॥ तत्रापि ज्येष्ठपद दण्डापूपिकन्याया दायादमात्रोपलक्षकम । ज्येष्ठस्यापि दोष किमुत 25 यवीयसामित्यर्थ ॥ अत एव गौतम । यो वै भागिन भागान्नुदते

पुनर्विभाग ।

चयत एवैन स यदि चैन न चयते ऽथ पुत्रमथ पौत्र चयत इति ॥ भागिन भागार्हं भागान्नुदते ऽपाकरोति स नुन्न एन नोत्तार चयने नाशयति । यदि त न

---

(१) वी० प० ३३१ पृ० १. मि० व्य० प० ५० पृ० २ क० नि० व्य० मा०

(२) क० नि०

(३) अविभाज्यम् इति मिताक्षरादिषु पाठ

(४) क० नि० व्य० मा० मि व्य प ५०पृ २

(५) क० नि० व्य० मा० वीरमित्रोदये तु युक्त्या विभ० उद्धृ य कू० एका स्त्री० इत्यर्धत्रय दृश्यते प० १६० पृ० २

(६) क० नि०, व्य० मा० वी० प० २१० पृ० १

(७) यो ज्येष्ठो वै इति मिताक्षरामाधवयो

(८) मि० व्य० प० ५३ पृ० २ वी० प० २२० पृ० १, क० नि०, व्य० मा०

(९) मि० व्य० प० ५० पृ० १ वी० प० २२० पृ० १ व्य० मा० क० नि० इत ऊर्ध्वमत्र नान्यदिति मिताक्षरादिष्वाधिक्यमत्र

नाशयति तत्पुत्रं पौत्रं वा नाशयतीत्यर्थः ॥ नारदः । विभक्तेनैव यत्प्राप्तं तत्तस्यैव धनं भवेत् । हृतं नष्टं च यल्लब्धं प्रागुक्तं च पुनर्भवेदिति ॥ प्रागुक्तं दायादमध्ये केनचित्प्रच्छादितम् । पुनर्भवेद्विभाग इति शेषः ॥ मनुः । विभागे तु कृते किंचित्सामान्यं यत्तु दृश्यते । नासौ विभागो विज्ञेयः कर्तव्यः पुनरेव हीति ॥

5 केनचिद्विभागस्यापलापे निर्णायकान्याह याज्ञवल्क्यः (व्य० श्लो० १४९)। विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः । विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥ यौतकैः पृथग्दत्तैर्गृहक्षेत्रैरिति विशेषणविशेष्यभावः ॥ नारदः । विभागधर्मसन्देहे दायादानां विनिर्णयः । ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥

विभागसन्देहे ।

स एव । भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते । विभागे सति धर्मोऽपि

10 भवेत्तेषां पृथक्पृथक् ॥ अत्राविभक्तानामित्येवोद्देश्यसमर्पकम् । भ्रातृणामिति तु तद्विशेषणत्वादविवक्षितम् ॥ तेन पितृपितामहपुत्रपौत्रपितृव्यभ्रातृभ्रातृपुत्रादिष्वप्यविभक्तेष्वेक एव धर्मः ॥ अत्र देशकालकर्त्रादीनामैक्ये कर्मणोऽनेकप्रयोगविधित्सायां न्यायेन प्राप्तापि तन्त्रताऽविभक्तकर्तृभेदेऽपि वचनेन बोध्यते ॥ तेन श्रौतस्मार्ताग्निसाध्यान्वाधानादिकर्माविभक्तानां पृथगेव । आहवनीयान्वाहार्यपचनादीनां ससम्बन्धिकत्वेन भेदात् ॥ एवं

15 श्राद्धमपि पितृव्यभ्रातृपुत्रादीनाममावास्यादौ देवताभेदात्पृथगेव । भ्रातृणां तु निरग्निकानां तन्त्रेणैव दैवतैक्यात् । प्रवासादिना देशभेदे तु पृथगेव । साग्निकानामग्निसाध्यान्यपि पृथगेव । गृहदेवतापूजावैश्वदेवादि तु तन्त्रेणैव ॥ अत एव शाकलः । एकपाकेन वसतामेकं देवार्चनं गृहे । वैश्वदेवं तथैवैकं विभक्तानां गृहे गृहे इति ॥ यत्तु पारिजाते आश्वलायनः एकपाकेन वसतां विभक्तानामपि प्रभुः । एकस्तु चतुरो यज्ञान् कुर्या-

20 द्राग्यसपूर्वकान् ॥ अविभक्ता विभक्ताश्च पृथक्पाका द्विजातयः । कुर्युः पृथक्पृथग्यज्ञान् भोजनात्प्राग्दिने दिने इति तत्संसृष्टिपरम् । विभक्तानामप्येकपाकेन वसतामित्यनेन विभक्ता अविभक्ताश्चेत्यनेन च तत्प्रतिपादनात् ॥ अतः संसृष्टिनां कदाचित्पृथक्पाके पृथग्गृहापत्तौ । वाक्यशो मलयनः ॥ तत्पूर्वकानित्यतद्गुणसंविज्ञाने तद्गुणसंविज्ञाने तु वाक्यशेषाद्ब्यनर्थकम् प्रथमत्यागे कारणाभावादिति न्यायादेव चतुर्णां प्राप्तिसम्भवात् ॥

25 अतो प्रश्नायत्ते पृथगेव कार्यं ॥ इदं तु वचनद्वयं शिष्टैस्तथा नाद्रियते ॥ यानि तु धर्मप्रवृत्तौ वचांसि अविभक्ताः सुता पित्रोरेव कुर्युर्मृताहिकम् । देशान्तरे पृथक्कुर्युर्दर्शश्राद्धानुमासिकम् ॥ ग्रामान्तरं व्रजेयुश्चेदविभक्ताः सदैव हि । दर्शं च मासिकं श्राद्धं कुर्युः पित्रोः पृथक्पृथक् ॥ अविभक्ताः पृथग्ग्रामाः स्वस्वार्जितधनाशिनः । कुर्युस्ते भ्रातरः श्राद्धं पार्वणं च पृथक्पृथगिति ॥ यच्च स्मृतिसमुच्चये वैश्वदेवः

30 कृसाहश्च महालयविधिस्तथा । देशान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव चेति तान्यपि देशान्तरस्थसंसृष्टविषयाणीति केचित् ॥ वस्तुतस्त्वेतानि निर्मूलान्येव ॥ अथवा देश-

(१) व्य० मा० बहुषु मतृपुस्तकेषु पुस्तकेषु ... ... इदं मतृपुस्तकेषु ... ... निर्भ ... ...
(२) ... ... ३११ ... ... ...
(३) मि० व्य० ... ५४ पृ० १, ... ... ३१२ पृ० १ ... ...
(४) मि० व्य० ... ५४ पृ० १, ... ... ३११ पृ० १ ... ...
(५) ... ... (क) (घ)

अथ सप्रतिबन्धदायहरणक्रम ॥ तत्र विभक्तस्यासंसृष्टिनो धनग्रहणे क्रममाह याज्ञवल्क्य. (श्लो० १३५।१३६)। पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥ एषामभावे पूर्वस्य धनभागुत्तरोत्तरः। स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिरिति ॥

विभक्तस्यापुत्रस्य धनेऽधिकारिणः।

पत्नी पतिव्रता धनहारिणी न व्यभिचारिणी। पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणीति कात्यायनोक्तेः। विधवा यौवनस्था चेन्नारी भवति कर्कशा। आयुषः क्षपणार्थं तु दातव्यं जीवनं तदेति हारीतोक्तेः ॥ प्रजापतिः। पूर्वं मृता त्वग्निहोत्रं मृते भर्तरि तद्धनम्। लभेत्पतिव्रता नारी धर्म एष सनातनः ॥ अग्निहोत्रमग्नीन् ॥ स एव। जङ्गमं स्थावरं सर्वं कुप्यं हेमरसाम्बरम्। आदाय दापयेच्छ्राद्धं मासषाण्मासिकाब्दिकम् ॥ पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान्। पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रिय इति ॥ कुप्यं त्रपुसीसादि ॥ यत्तु बृहस्पतिः यद्विभक्तं धनं किञ्चिदाध्यादि विविधं स्मृतम्। तज्जाया स्थावरं मुक्त्वा लभेत मृतभर्तृका ॥ वृत्तस्थापि कृतेऽप्यंशे न स्त्री स्थावरमर्हतीति तद्दुहितृरहितपत्नीपरम् ॥ दुहितृमती तु स्थावरमपि लभत इति स्मृतिचन्द्रिकायाम् ॥ दायादानुमतिं विना स्थावरविक्रयादिनिषेधपरमिति माधवः ॥ यत्तु कात्यायनः मृते भर्तरि भर्त्रंशं लभेत कुलपालिका। यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये इति तद्बन्दिचारणाद्यर्थदानादिनिषेधपरम् ॥ अदृष्टार्थदानतदुपयोग्याधमनादि तु भवत्येव। स्थावरं जङ्गमं चेत्यादिपूर्वोक्तवाक्यात्। व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता। दमदानरता नित्यमपुत्रापि दिवं व्रजेदिति कात्यायनाच्च ॥ यदपि ॥ एव अदायिकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम्। अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेदिति ॥ यदपि नारद अन्यत्र ब्राह्मणात्किन्त्विद्राजा धर्मपरायणः। तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृत इति तदवरुद्धस्त्रीपरम्। पत्नीपदाश्रवणात् ॥ यत्तु नारद भ्रातृणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा। विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं विना ॥ भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु चेति तदविभक्तसंसृष्टमृतस्त्रीपरम् तत्प्रकमे पठितादिति मदन ॥ कात्यायन। स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी। अविभक्ते धनांशं तु प्राप्नोत्यामरणान्तिकमिं ॥ अविभक्तपद संसृ-

(१) दी० प० १६३ पं० १ क० नि० स्व० मा०
(२) मि० स्व० प० ५७ पं० १ दी० प० १०५ पं० २ क० नि० स्व० मा०
) मि० स्व० प० ५९ पं० २ दी० प० १०८ पं० १
) दी० प० १०१ पं० १
) दी० प० १०१ पं० २; स्व० मा०
) 'न' इति पदं मयूखस्य कस्ये
(७) दी० प० १६१ पं० २ क० नि०
(८) दी० प० १०१ पं० २
(९) क० नि०; स्व० मा०
(१०) दी० प० १६४ पं० १, क० नि०
(११) मि० स्व० प० ५८ पं० १, स्व० मा०
(१२) दी० प० १६५ पं० २, स्व० मा० क० नि० नेति दाने मयूखकमलाकरयो।
(१३) दी० प० १६३ पं० १, क० नि०

ष्टस्याप्युपलक्षणम् । तुशब्दो वाशब्दार्थे तेन पक्षद्वयम् तत्राद्य पत्नीपर. आद्यो- ऽवरुद्धापर इति **मदन** ॥ एतद्व्यवस्थामूलं चिन्त्यम् ॥ तात्त्विकीं तु व्यवस्थामाह स एव ॥ भोक्तुमर्हति कृत्स्नांशं गुरुशुश्रूषणे रता । न कुर्याद्यदि शुश्रूषां चैलं पिण्डं नियोजयेदिति ॥ गुरुः श्वशुरादिः । तदिच्छायामंशभाक्त्वम् अन्यथा ग्रासाच्छाद- नमात्रमित्यर्थः ॥ स एव । अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिनी । व्यभिचा- ररता या च स्त्रीधनं न च साऽर्हति ॥ यत्तु एतमेव विधिं कुर्याद्योषित्सु पतितास्वपि । वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके इति तद्भर्तृपरमिति ग्रन्थकृतः ॥ एवं विधिं पतितत्यागरूपम् ॥ शङ्कितव्यभिचाराया अपि भरणमात्रमेव । विधवा यौवनस्था चेन्नारी भवति कर्कशा । आयुषः क्षपणार्थं तु दातव्यं जीवनं तदेति **हारीतोक्तेः** ॥ कर्कशा शङ्कितव्यभिचारेति **मिताक्षरायाम** ( व्य० प० ५९ पृ० १ ) ॥ तत्सिद्धं संयता पत्नी धनग्राहिणीति ॥ अनेकास्तु ता विभज्य गृह्णीयुः ॥

*तस्या अभावे दुहिता* ॥ अत एव **मनुः** । (अ० ९ श्लो० १३०) । यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ दुहितरोऽनेकाश्चेद्विभज्य गृह्णीयुः । तत्रापि का-

दुहिता ।

चिदूढा काचिदनूढा चेदनूढैव । पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी । तद- भावे तु दुहिता यद्यनूढा भवेत्तदेति **कात्यायनीयात्** । ऊढासु काचित्सधना परा निर्धना चेत्सैव लभेत । स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति **गौतमोक्तेः** ॥ अप्रतिष्ठिता निर्धनाः ॥ स्त्रीपदं पितुरप्युपलक्षणमिति **साम्प्रदायिकाः** ॥

*दुहित्रभावे दौहित्रः* ॥ अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः । पूर्वेषां तु स्वधा- कारे पौत्रा दौहित्रका मता इति **विष्णूक्तेः** ॥

दौहित्र ।

*दौहित्राभावे पिता । तदभावे माता* ॥ तथा च **कात्यायनः** । अपुत्रस्यास्य कुल- जा पत्नी दुहितरोऽपि वा । तदभावे पिता माता भ्राता पुत्राः प्रकीर्तिताः ॥ **विष्णुश्च** । अपुत्रधनं पत्न्यभिगामि । तदभावे दुहितृगामि । तदभावे दौहित्रगामि । तदभावे पितृगामि ।

पिता ।
माता ।

तदभावे मातृगामि । तदभावे भ्रातृगामि । तदभावे भ्रातृपुत्रगामि । तदभावे सकुल्य- गामि ॥ यत्तु **विज्ञानेश्वरः** ( मि० व्य० प० ५९ पृ० २) द्वन्द्वापवादके पितराविति- त्येकशेषे क्रमाप्रतीतावपि तदर्थबोधके विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादपवाद्यद्वन्द्व- क्रमानुसारात्पितुः पुत्रान्तरसाधारण्यान्मातुस्त्वसाधारण्याच्चादौ माता तदभावे पितुर्धन- ग्रहणमूचे तदेतद्वचोविरोधादपास्तम् । विग्रहवाक्ये मातृशब्दपूर्वनिपात एकशेषस्य द्वन्द्वैकल्पिकत्वेन तदपवादत्वे साधारण्यासाधारण्ययोः क्रमनियामकत्वे मानाभावाच्च ॥

---

(१) वी० प० २०३ पृ० २ क० वि०

(२) वी० प० २०२ पृ० २, क० वि० व्य० मा० शोका दौ अपकारेत्यत्र अपचरेति पाठः

(३) मि० व्य० प० ५९ पृ० २, वी० प० २०५ पृ० १, क० वि० व्य० मा०

(४) वी० प० २०५ पृ० २ मि० व्य० प० ५९ पृ० २

(५) मि० व्य० प० ६० पृ० १, वी० प० २०५ पृ० १ मिताक्षरायां बृहद्विष्णुरित्युपक्रम्यै- तदुपन्यस्तम्

मातुरभावे भ्राता सोदर । तदभावे तत्पुत्र ॥ यत्तु विज्ञानेश्वरादय (मि० व्य० पृ० ६० पं० १) सोदराभावे भिन्नोदरास्तदभावे सोदरसुता इत्याहु तन्न । भ्रातृपदस्य सोदरे शक्त्या भिन्नोदरे च गौण्या वृत्तिद्वयविरोधात् ॥ केचित्तु भ्रातर इत्यत्र भ्रातृपुत्रौ स्व

भ्राता । तत्पुत्र ।

5 सृदुहितृभ्यामित्यनुशासनात् भ्रातरश्च स्वसारश्च भ्रातर इति विरूपैकशेषेण भ्रात्रभावे भगिन्य इत्याहु तन्न । विरूपैकशेषे मानाभावात् ॥ भ्रातृपुत्रा अपि पितृव्यमरणकाले जीवत्पितृकतया ऽसञ्जातधनसम्बन्धाश्चेदनेकपितृकाणां तु पितृतो भागकल्पनेति न्यायेन पित्र्यमंशं पितृव्यान्तरैः सह विभज्य गृह्णीयु ॥

भ्रातृपुत्राभावे गोत्रजा सपिण्डा ॥ तत्राप्यादौ पितामही ॥ मातर्यपि च वृत्ताया
10 पितुर्माता हरेद्धनमिति मनूक्ते (अ० ९ श्लो० २१७) ॥ यद्यपीयं मातुरनन्तरं श्रुता तथापि बद्धक्रमभ्रातृपुत्रान्तेषु मध्ये निवेशायोगादागन्तूनामन्ते निवेश इतिवद्भ्रातृपुत्रान्ते निवेश्या ॥

तदभावे भगिनी ॥ अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति मनूक्ते (अ० ९ श्लो० १८७) ॥ बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
15 यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेदिति वृहस्पत्युक्ते ।

भगिनी ।

तस्या अपि भ्रातृगोत्र उत्पन्नत्वेन गोत्रजत्वाविशेषाच्च ॥ सगोत्रता परं नास्ति । न च सात्र धनग्रहणप्रयोजकत्वेनोक्ता ॥

तदभावे पितामहसपत्नभ्रातरौ विभज्य गृह्णीत । स्वजनकजनकत्वेन स्वजनकजन्यत्वेन च समानप्रत्यासत्ते ॥ प्रत्यासत्तिसाम्ये पाठक्रमादगुणविशेषान्तराभावे चान्यत्राप्येवमेव ॥ तेन तयोरभावे प्रपितामह
20

गोत्रजा

पितृव्यभिन्नोदरभ्रातृपुत्रा विभज्य गृह्णीयु ॥

सर्वसपिण्डा समानोदकाश्च प्रत्यासत्तिक्रमेण ॥ ताश्चाह मनु (अ० ५ श्लो० ६०) सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने इति ॥ सप्तमेऽतीत इत्यर्थ ॥

समानोदक ।

25 सोदकाभावे बन्धव । ते च स्मृत्यन्तरे । आत्मपितृष्वसु पुत्रा आत्ममातृष्वसु सुता । आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवा ॥ पितु पितृष्वसु पुत्रा पितुर्मातृष्वसु सुता । पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवा ॥ मातु पितृष्वसु पुत्रा मातुर्मातृष्वसु सुता । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवा ॥ अत्र क्रम पाठिक एव । ननु पत्न्यादीनां सर्वेषां मृतनिरूपिता-

बन्धव ।

(१) जी० दा० पृ० २९८ । २९६
(२) मि० व्य० पृ० ६० पं० ३ वी० पृ० १९५ पं० ३
(३) मि० व्य० पृ० ६० पं० १ वी० पृ० २०८ पं० १ क० नि०
(४) वी० पृ० २०८ पं० १ क० नि०
(५) मि० व्य० पृ० ६० पं० १ वी० पृ० २०९ पं० २ क० नि० व्य० मा०
(६) एते [illegible] इति मध्याभिमतम् मि० व्य० पृ० ६० पं० ६ वी० पृ० ०९ पं० २ व्य० मा० क० नि०
(७) [illegible] इति न्यायात् ॥

नामेव धनभाक्त्वम् बान्धवानामपि तथैवास्तु अत कथ पितुर्मातुश्च बान्धवाना धनसम्बन्ध । पितु पितृष्वसु पुत्रा इत्यादि तु सञ्ज्ञासञ्ज्ञिसम्बन्धमात्रार्थं न धनसम्बन्धार्थमिति चेदुच्यते । विनाप्येतद्वचन पितृमातुलपितृपितृव्यादिष्विव पितृमातृबान्धवेष्वपि योगेनैव तच्छब्दप्रवृत्तिसम्भवे सञ्ज्ञासञ्ज्ञिसम्बन्धबोधनानर्थक्यापत्ति ॥ तेन बन्धूनुद्दिश्य धनसम्बन्धविधौ पितृमातृबन्धुप्रापणेनैव वचोऽर्थवत्ता ॥ बन्धूद्देशेनाशौचादिविधावप्येवमेवेति दिक ॥ 5

बन्धूनामभाव आचार्य तदभावे शिष्य ॥ पुत्राभावे प्रत्यासन्न सपिण्डस्तदभाव आचार्य शिष्य । आचार्यस्तदभावेऽन्तेवासीत्यापस्तम्बोक्ते ॥

शिष्याभावे सहाध्यायी । तदभावे श्रोत्रिय ॥ श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थ सब्रह्मचारिणो वा। भजेरन्निति गौतमोक्ते ॥ 10

तदभावेऽन्यो ब्राह्मण ॥ सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिन । त्रैविद्या शुचयो दान्तास्तथा धर्मो न हीयत इति कात्यायनीयात् । नारदश्च । सर्वथादायिक राजा हरेद्ब्रह्मस्ववर्जितम् । अदायिक तु ब्रह्मस्व श्रोत्रियेभ्य प्रदापयेत् ॥ बृहस्पति । येऽपुत्रा-क्षत्रविट्शूद्रा पत्नीभ्रातृविवर्जिता । तेषा धनहरो राजा सर्वस्यापि पतिर्हि स ॥ 15

यत्यादिरिक्थे विशेषमाह याज्ञवल्क्य (व्य० श्लो० १३७)। वानप्रस्थयतिब्रह्मचारिणा रिक्थभागिन । क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिन ॥ ब्रह्मचारी नैष्ठिक । उपकुर्वाणस्य तु पित्रादय एव । धर्मभ्राता प्रतिपन्नो भ्राता । एकतीर्थ एकाश्रमी । धर्मभ्राता चासावेकतीर्थी चेति कर्मधारय ॥ आचार्यादीना प्रातिलोम्येन क्रम इति विज्ञानेश्वर (मि० व्य० प० ६० पृ० 20 २) ॥ वनस्थस्य धनमाचार्यो गृह्णीयाच्छिष्यो वेति विष्णूक्तेरानुलोम्येनेति मदन ॥

मृतस्य रिक्थग्राहिणा येन केनापि राजपर्यन्तेनौर्ध्वदेहिक दशाहान्त कार्यम् ॥ तथा च विष्णु । यश्चार्थहर स पिण्डदायी स्मृत इति ॥ निरूपित चेद श्राद्धमयूखेऽधिकारिनिर्णये मया ॥

ब्राह्मण । अदायिके । यत्यादिरिक्थे ।

---

## ॥ अथ संसृष्टिनिर्णय ॥ 20

तत्र संसर्गमाह बृहस्पति । विभक्तो य पुन पित्रा भ्रात्रा वैकत्र संस्थित । पितृव्येणाथ वा प्रीत्या स त संसृष्ट उच्यते ॥ अत्र पितृभ्रातृपितृव्यैरेव सह संसृष्टता, नान्येन, वचनेऽनुपादानादिति

संसृष्टिनिर्णय ।

---

(१) मि० व्य० प० ६० पृ० २ वी० प० २०९ पृ० २ व्य० मा० क० वि०

(२) मि० व्य० प० ६० पृ० २ वी० प० २०९ पृ० २, क० वि० व्य० मा० इद मनुवचनमिति मिताक्षरादिपूक्तम्

(३) क० वि० तत्रेद दत्तवचनमित्युपन्यस्तम्

(४) वा० प० २१० पृ० १ क० वि० व्य० मा०

(५) वी० प० २१० पृ० २ जी० दा० प० ३३८

(६) क० वि०

(७) मि० व्य० प० ६१ पृ० १ वी० प० १६९ पृ० १ क० वि० व्य० मा०

मिताक्षरादिषु ( व्य० प० ६१ पृ० १ ) । विभागकर्तृसामानाधिकरण्येनैव सेति युक्तम् ॥ पित्रादिपदानि तु विभागकर्तृमात्रोपलक्षकाणि । अर्धमन्तर्वेदिमिनोत्यर्धं बहिर्वेदीतिवत् । अन्यथा वाक्यभेदात् ॥ तेन पत्नीपितामहभ्रातृपौत्रपितृव्यपुत्रादिभिरपि सह संसृष्टता भवति ॥ विभक्तो य एकत्र स्थितः स संसृष्ट इति सामानाधिकरण्याद्वि-
5 भक्तभ्रात्रोः पुत्रादीनां न संसर्गः ॥ विद्यमानं भावि वा धनमावयोः पुनर्विभागावधिसाधारणमित्याकारिका बुद्धिरिच्छा वा संसर्गः ॥ तत्र संसृष्टिनां पुनर्विभागे विशेषमाह मनुः (अ० ९ श्लो० २१०) । संसृष्टाः सहजीवन्तो विभजेरन्पुनर्यदि । समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥ अत्र समस्तत्र विभागः स्यादित्यनेनैव वैषम्ये निरस्ते पुनर्ज्यैष्ठ्यप्रतिषेधो ज्यैष्ठ्यकृतमेव वैषम्यं नास्ति संसर्गकालिकद्रव्यन्यूना-
10 धिक्यकृतं तु विभागे वैषम्यमस्त्येवेति ज्ञापनार्थमिति केचित् ॥ ज्यैष्ठ्यमित्यादेरर्थवादमात्रत्वात्द्रव्यन्यूनाधिक्येऽपि सम एव विभागः ॥ आचारोऽप्येवम् ॥ तेनाचारमूलकत्वेऽस्य वचसः सम्भवति तद्विरुद्धश्रुतिकल्पनमन्याय्यम् ॥ व्यवहारशास्त्रस्य व्याकरणवत्प्रायेणाचारमूलकत्वाच्चेति तु परे ॥ बृहस्पतिः । संसृष्टिनां तु यः कश्चिद्विद्याशौर्यादिभिर्धनम् । प्राप्नोति तस्य दातव्यौ द्व्यंशः शेषाः समांशिनः ॥ अर्जकस्य द्वौ
15 भागावित्यनेनैव भागद्वयसिद्धावसंसृष्टविभागे पितृद्रव्याविरोधेनैवार्जने भागद्वयम् संसृष्टिभागे तु संसृष्टधनविरोधेनाप्यर्जने भागद्वयमित्यर्थवदेतद्वचनमिति मदनः ॥

संसृष्टिधनहरणाधिकारिणमाह याज्ञवल्क्यः (व्य० श्लो० १३८) । संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ॥ पत्नी दुहितर इत्यादेरपवादोऽयं ॥ तेनायमर्थः । संसृष्टधनहरणाधिकारितावच्छेदकं न पत्नीत्वादि

तद्धनाधिकारिण.।

20 किंतु संसृष्टित्वमिति ॥ यत्तु विज्ञानेश्वर (मि० व्य० प० ६१ पृ० १) मदनादयोऽपवादस्योत्सर्गसमानविषयत्वनियमात्पूर्वोक्तस्वर्यातस्यापुत्रस्येत्यस्यदानुषङ्गाच्चैतदपि पुत्रपौत्रप्रपौत्रहीनविषयम् अतस्तादृशमृतसंसृष्टिधनमसंसृष्टिसन्निहितपत्न्यादिसद्भावेऽप्यन्यः संसृष्टयेव गृह्णीयादिति तच्चिन्त्यम् । तेन विनापि गतौ सम्भवन्त्यामनुषङ्गे मानाभावात् ॥ समानविषयत्वं तु न सर्वांशेऽपेक्षितं किंतु यथाकथंचिन्मृतसपिण्डविषयत-
25 या ॥ अपुत्रस्येति पदस्यानुषङ्गाभावे स्वर्यातस्येत्यस्याप्यनुषङ्गाभावेन मृतस्येति न लभ्येतेति चेन्न । ह्रियेतांशप्रदानतो म्रियेतान्यतरो वापीति वक्ष्यमाणमनूक्त्या तल्लाभात् ॥ अनुषङ्गे तु पित्रासह संसृष्टासंसृष्टिनोः पुत्रयोः पुत्रपौत्रयोर्वा तुल्यांशापत्तिः । सपुत्रे प्रसक्तेतद्वचनाप्रवृत्तेः ॥ तत्र च व्यवहारशास्त्रप्रामाण्यानिदानव्यवहारविरोधः ॥ नन्वनुषङ्गाभावे सपुत्रे प्रसक्त्येतद्वचनप्रवृत्तेरसंसृष्टिपुत्रसंसृष्टिभ्रात्रादीनां समवाये भ्रात्रा-
30 दिरेव लभेत न पुत्रादिरिति चेन्न । उत्तरार्धव्याख्यया परिहरिष्यमाणत्वात् ॥ अमुं

(१) 'विभक्ता' इति मिताक्षरादिषु । अत्र दर्शितमनुस्मृतिपुस्तकेऽप्येवमेव

(२) मि० व्य० प० ६१ पृ० २, वी० प० २१० पृ० १, व्य० मा०

(३) एवमेव कमलाकरेण व्याख्यातं माधवेन न । एतदेव वीरमित्रोदयकारस्य सम्मतम् (वी० प० २१० पृ० २).

(४) 'नाधिकम्' इति माधववीरमित्रोदययोः ।

(५) वी० प० २२० पृ० ३, व्य० मा०.

(६) वी० प० २१० पृ० २, क० नि०, व्य० मा०.

प्रथमपादार्थमपवदति ॥ सोदरस्येति ससृष्टिन ससृष्टीत्यनुपज्यते । मृतससृष्टिनो धन ससृष्टिनो सोदरासोदरयो समवाये सोदर एव ससृष्टी गृह्णीयादित्यर्थ ॥ उत्तरार्ध दद्याच्चापहरेच्चांश जातस्य च मृतस्य चेति (या० व्य० श्लो० १३८) ॥ मृतस सृष्टिनो द्रव्यविभागकाले तत्पत्न्यामसष्टगर्भाया पश्चादुत्पन्नस्य पुत्रस्याश तस्मै ससृष्ट पितृव्यादिर्दद्यात् तदभावे तु स्वयमेवाश हरेदित्यर्थ ॥ अत्र पुत्रत्वमात्र पित्रश 5 ग्रहणाधिकारितावच्छेदकम् न विभागोत्तरोत्पन्नत्वम । अप्रयोजकत्वाद्दौरवादेशान्तरे विभागात्प्रागुत्पन्ने ज्ञाते चाशानधिकारितापत्ते ॥ अत पूर्वोक्तन्यायात्ससृष्टिनेऽपि पुत्राय ससृष्टयपि पितृव्यादिस्तदश दद्यादेव ॥ असससृष्टिसोदरससृष्टिभिन्नोदरयोर्विभज्य धनग्रहणमाह स एव ॥ (व्य० श्लो० १३९) अन्योदर्यस्तु ससृष्टी नान्योदर्यो धन हरेत् । असंसृष्टयपि चादद्यात्ससृष्टो नान्यमातृज इति ॥ अत्रान्योदर्यान्यमातृजौ 10 द्विपदैर्न सापत्नो भ्रातैवोच्यते किंतु पितृव्यादिरपि । योगाविशेषात् ॥ अन्यथा पितृव्यादिभि ससर्गप्रतिपादनस्यानर्थक्यापत्ति ससृष्टितामयुक्तकार्यान्तराभावात ॥ असससृष्टयपीति देहलीदीपवत्पूर्वोत्तरपदाभ्यामन्वेति ॥ ससृष्टपद चावृत्त्या द्रव्यस सर्गवत उदरससर्गवतश्च सोदरस्य बोधकम् ॥ आद्येऽप्यपिशब्दोऽपि तदनन्तर बोध्य ॥ श्लोकान्ते एवकारोऽध्याहार्य ॥ तदेते वाक्यार्था । अन्योदर्यो भिन्नोदर 15 पत्नीपितृपितामहसापत्नभ्रातृपितृव्यादि ससृष्टी चेद्धन हरेत । असंसृष्टयप्यन्योदर्यो नेति ॥ तेनान्योदरस्यान्वयव्यतिरेकाभ्या ससर्गो धनग्रहणे कारणमुक्तम् ॥ अस सृष्टयपि ससृष्टयास्त्यसोदरो गृह्णीयात ॥ अनेन सोदरत्वमात्रमेव कारणमुक्तम् ॥ ससृष्टो द्रव्यससर्गवानन्यमातृज एव केवल न गृह्णीयादिति ॥ तेनैक ससृष्टत्वेन पर सोदरत्वेनेति द्वावपि विभज्य गृह्णीयातामिति निगर्व ॥ एतमेवार्थ ससृष्टयधिकारे 20 स्पष्टयति मनु (अ० ९ श्लो० २११।२१२)। येषा ज्येष्ठ कनिष्ठो वा हीयेताश प्रदानत । म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥ सोदर्या विभजेयुस्त समेत्य सहिता समम । भ्रातरो ये च ससृष्टा भगिन्यश्च सनाभय इति ॥ हीये ताश्रमान्तरगतपतितत्वादिना । सोदर्या भ्रातर इत्यन्वय । ये च ससृष्टा पत्नीपितृ पितामहसापत्नभ्रातृपितृव्यादय ॥ अत्र विशेषमाह प्रजापति । अन्तर्धन तु यद्द्रव्य 25 ससृष्टाना तु तद्भवेत । भूमि गृह त्वससृष्टा प्रगृह्णीयुर्यथाशत ॥ अन्तर्धन भूमिनि क्षेपादिना गोपितु शक्य सुवर्णरूप्यादि । ससृष्टो भिन्नोदरो गृह्णीयात । ध्रुव तु सोदरभ्रातर । गवाश्वादि तु सोदरोऽसोदर इत्यर्थ ॥ भिन्नोदर ससृष्टयेव गृहाद्यपि पीति मदन ॥ तत्स्वेतद्वचनानारूढम् ॥ अन्तर्धनभूमिगवाद्यन्यतरमात्रसत्त्वे त्वस सृष्टोऽपि सोदर एवेति स्मृतिचन्द्रिकायाम् । तत्र मान चिन्त्यम् ॥ सोदरेष्वपि 30 केचित्ससृष्टिन परेतु न तत्रापि ससृष्टिन एव गृह्णीयु । सोदरत्वससृष्टित्वकार णद्वयसद्भावात् ॥ अत एव गौतम । ससृष्टिनि प्रेते ससृष्टो रिक्थभागिति ॥ बृहस्पति ।

---

(१) वी० प० २२०पृ० २ क० वि व्य० मा
(२) वी० प० २११पृ० २ क० वि० व्य मा
(३) मि० व्य० प० ६१पृ० २ वी० प० २११ पृ० १ क० वि० व्य० मा०
(४) वी० प० २१२ पृ० १ क० वि० व्य० मा०
(५) व्य० मा०

संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनाविति ॥ अत्राय निर्गलितोऽर्थः ॥ पुत्रः पित्रा संसृष्टोऽसंसृष्टो वा कृत्स्नं पित्र्यमंशं गृह्णीयात् । पुत्रत्वस्यैवांशग्रहणाधिकारितावच्छेदकत्वात् ॥ पुत्रेष्वप्येकः संसृष्टः परो न चेत्संसृष्ट एव । संसृष्टिनस्तु संसृष्टीत्युक्तेः ॥ संसृष्टपुत्रापुत्रसमवाये पुत्र एव । दद्याच्चापहरेच्चांशमित्यत्र व्याख्यातत्वात् ॥ पुत्रभिन्नसंसृष्टपितृभ्रातृपितृव्यादीनां समवाये पितरावेव ॥ तत्राप्यादौ माता ततः पितेति मदनः ॥ भ्रातृपितृव्यादयस्तु विभज्यैव गृह्णीयुः । सर्वेषु संसृष्टत्वरूपग्रहणाधिकारितावच्छेदकसद्भावात् ॥ असंसृष्टभ्रातुः संसृष्टपितृव्यसापत्नभ्रात्रादीनां च समवायेऽपि विभज्यैव । असंसृष्टयपि चाददीत संसृष्टो नान्यमातृज । संसृष्टिनस्तु संसृष्टी, सोदरस्य तु सोदर इत्युक्ते ॥ केवलाया पत्न्या एव संसृष्टत्वे सैव गृह्णीयात् । संसृष्टिनस्तु संसृष्टीत्युक्ते ॥ संसृष्टयापि तया सहान्येषां संसृष्टिनां समवाये त एव न सा ॥ तथा च संसृष्टिप्रक्रमे शङ्खनारदौ । भ्रातृणामप्रजा प्रेयात्कश्चिच्चेत्प्रव्रजेत वा । विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं विना ॥ भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात् । रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु ॥ या तस्य दुहिता तस्याः पित्र्योऽशो भरणं मतम् । आसंस्काराद्धरेद्भागं परतो बिभृयात्पतिः ॥ अत्र यथा यस्य हविर्निरुप्तं पुरस्तात्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेदित्यत्र हविरभिन्न उदियादित्यनेनैव हविः प्रवृत्त्यवगमान्निर्वापाविवक्षा तथा प्रक्रमादेव भरणप्रव्रज्याविभागादिषु संसृष्टिना कर्तृत्वावगमाद्भ्रातृणामित्यविवक्षितम् ॥ यत्तु संसृष्टिप्रक्रमे शङ्खः स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नीति तदेन पितृव्यभ्रातृपुत्रसापत्नभ्रात्रा सह संसर्गस्तत्र मरणोत्तरं संसृष्टिमरणे तदीयासंसृष्टिभ्रात्रादीनां क्रमनियमार्थमिति मदनः ॥ तत्राप्यादौ माता ततः पितेत्यपि स एव ॥ ज्येष्ठा सवर्णा ॥ पत्न्यभावे भगिनी ॥ तथा च बृहस्पतिः ॥ या तस्य भगिनी सा तु ततोंऽशं लब्धुमर्हति । अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥ केचित्तु या तस्य दुहितेति पेठुः ॥ दुहितृभगिन्योरभावेऽनन्तरः सपिण्डः ॥*

---

(१) मि० व्य० प० ५९ पृ० २ वी० प० ११३ पृ० ८ व्य० मा० क० वि०

(२) जी० दा० प० १४३

(३) व्य० मा०, क० वि०, वी० प० ५१३ पृ० २

*श्रीकृष्णतर्कालङ्कारभट्टाचार्यकृतजीमूतवाहनदायभागटीकायां तु मृतपुरुषधनाधिकारिक्रम एवं दर्शितः अस्य मृतपुरुषधनाधिकारिक्रमः । तत्र प्रथमं पुत्रः तदभावे पौत्रः तदभावे प्रपौत्रः मृतपितृकपौत्रमृतपितृपितामहकप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकारः । प्रपौत्रपर्यन्ताभावे पत्नी सा च पातिव्रत्या भर्तृकुले तदभावे पितृकुले वा समाश्रिता सती शरीररक्षार्थं भर्तृदायं भुञ्जीत । तथा । भर्तुरुपकाराय पथ्यकथंचिद्दानादि किमपि कुर्वीत न तु स्वधनवत्स्वच्छन्दं विनियुञ्जीत । तदभावे दुहिता तत्र प्रथमं कुमारी तदभावे वाग्दत्ता तदभावे ऊढा सा च पुत्रवती सम्भावितपुत्रा च द्वे युगपदेवाधिकारिण्यौ वन्ध्या विधवा च पुत्रहीना नाधिकारिणी । ऊढाया अभावे दौहित्रः तदभावे पिता तदभावे माता तदभावे भ्राता तत्रापि प्रथमं सोदरः तदभावे वैमात्रेयः मृतस्य भ्रातृसंसर्गे तु सोदरभ्रातृविषये प्रथमं संसृष्टसोदरः पश्चादसंसृष्टसोदरः तदभावे असंसृष्टसोदरः एवं वैमात्रेयभ्रातृविषये प्रथमं संसृष्टवैमात्रेयः तदभावे असंसृष्टवैमात्रेयः । यदा असंसृष्टो वैमात्रेयः सोदरश्चासंसृष्टः तदा तावुभौ तुल्यवदधिकारिणौ । भ्रातृणामभावे भ्रातृपुत्रः । तत्रापि प्रथमं सोदरभ्रातृपुत्रः तदभावे वैमात्रेयभ्रातृपुत्रः संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टसोदरभ्रातृपुत्रः । तदभावे असंसृष्टसोदरभ्रातृपुत्रः वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्रः । तदभावे असंसृष्टवैमात्रेय-

## ॥ अथ स्त्रीधनम् ॥

स्त्रीधन तद्भेदाश्च ।

**मनु** (अ० ९ श्लो० १९४) । अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ षडिति न्यूनसङ्ख्याव्यवच्छेदार्थम् । तेन (व्य० श्लो० १४३) पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितमिति याज्ञवल्कीयमाद्यपदं सङ्गच्छते ॥ **विष्णु**श्चाधिकमाह । पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति ॥ अध्यग्न्यादीन्याह **कात्यायन** । विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ । तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥ यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् । अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥ प्रीत्या दत्तं तु यत्किञ्चिच्छ्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥ विवाहात्परतो यत्तु लब्धं भर्तृकुलात्स्त्रिया । अन्वाधेयं तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥ गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम् । मूल्यं लब्धं तु यत्किञ्चिच्छुल्कं तत्परिकीर्तितम् ॥ गृहोपस्करादालाभे तन्मूल्यं कन्यादानकाले कन्यायै दत्तं तच्छुल्कमित्यर्थः ॥ आधिवेदनिकं विवृणोति **याज्ञवल्क्य** (व्य० श्लो० १४८) । अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ॥ न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकल्पयेत् ॥ अर्धमिति यावताधिवेदनिकद्रव्यसमं भवति तावदित्यर्थः ॥ **देवल** । भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं श्रुतिः ॥ प्रतिश्रुतं स्त्रियै ॥ स्त्रीभ्यो धनदाने विशेषमाह **कात्यायन** । पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै । यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥ स्थावरातिरिक्तं सहस्रद्वयपणावधि देयमिति **मदन** ॥ **व्यासो**ऽपि । द्विसाहस्रः परो दाय

---

भ्रातृपुत्रः । यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रश्च संसृष्टः तदा द्वौ भ्रातृवत्तुल्याधिकारिणौ । भ्रातृपुत्राभावे भ्रातृपौत्रः । तत्रापि भ्रातः सोदरासोदरक्रमः संसर्गासंसर्गक्रमश्च बोध्यः । तदभावे पितृदौहित्रः स च सोदरभगिनीपुत्रः तदभावे वैमात्रेयभगिनीपुत्रश्च तदभावे पितुः सहोदरः । तदभावे पितुर्वैमात्रेयः । तदभावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधिकारः । तदभावे पितामहदौहित्रः तत्रापि पितृसोदरभगिनीपुत्रः वैमात्रेयभगिनीपुत्रश्च वक्ष्यमाणप्रपितामहदौहित्राधिकारेऽप्येवम् । तदभावे पितामहः तदभावे पितामही तदभावे पितामहसहोदरभ्रातृवैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिकारिणः । एतावत्पर्यन्तानां धनिभोग्यपिण्डदातॄणां त्वभावे धनिदेयपिण्डदातॄणां मातुलादीनामधिकारः तदभावे धनिमातृष्वस्रीयस्याधिकारः तदभावे मातुलपुत्रपौत्राणां क्रमेणाधिकारः तदभावे चाधस्तनसकुल्यानां धनिभोग्यलेपदातॄणां प्रपौत्रप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः तदभावे पुनरूर्ध्वतनसकुल्यानां धनिदेयलेपदातॄणां वृद्धप्रपितामहादिसन्ततीनामासन्नक्रमेणाधिकारः तदभावे समानोदकानामधिकारः । तेषामभावे चाचार्यस्य तदभावे शिष्यस्य तदभावे सहवेदाध्यायिब्रह्मचारिणोऽधिकारः । तदभावे चैकग्रामस्थसगोत्रसमानप्रवरयोः क्रमेणाधिकारः । एतत्पर्यन्तानां सर्वथा सम्बन्धिनामभावे ब्राह्मणधनवर्जं राजा गृह्णीयात् । ब्राह्मणधनं तु त्रैविद्यादिगुणयुक्ता ब्राह्मणा गृह्णीयुः । एवं वानप्रस्थधनं भ्रातृत्वेनानुमतो ऽपरो वानप्रस्थ एकतीर्थसेवी गृह्णीयात् । तथा यतिधनं सच्छिष्य नैष्ठिकब्रह्मचारिणो धनमाचार्ये उपकुर्वाणस्य तु ब्रह्मचारिणो धनं पित्रादिर्गृह्णीयादिति सङ्क्षेपः ॥(जी० दा० पृ० ११९—१४९)

(१) मि० व्य० प० ६२ पृ० २ वी०प०२१४ पृ० १ क० वि० व्य० मा०

(२) वी०प०२१४पृ०१ क०वि० व्य०मा०

(३) वी० प० २१४ पृ० १

(४) मि० व्य० प० ६२ पृ० २ वी० प० २१४ पृ० २, क० वि० व्य० मा०

(५) वी० प० २१५पृ०१, क० वि० व्य० मा०

(६) वी० प० २१६ पृ०१

(७) वी० प० २१५ पृ० १, व्य० मा०

स्त्रिया देयो धनस्यैव ॥ इदं च द्विसहस्रावधिकं दानं प्रतिवर्षम् ॥ अनेकवर्षेष्वितोऽधिकमपि शक्तौ स्थावरमपि च देयमित्यपि स एव ॥

दायादवञ्चनेन दत्ते द्रव्ये धारणमात्रार्थं दत्ते च भूषणादौ स्त्रीस्वत्वं नास्तीत्याह कात्यायनः । तत्र सोपधि यद्दत्तं यच्च योगवशेन वा । पित्रा भ्रात्राथ पत्या वा न तत्स्त्रीधनमुच्यते ॥ शिल्पप्राप्ते पित्रादिभिन्नसख्यादिप्राप्तेऽपि स्त्रीधनत्वं नास्तीत्याह स एव । प्राप्तं शिल्पैस्तु यत्किंचित्प्रीत्या चैव यदन्यतः । भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् । यत्तु भार्या पुत्रश्च दासश्च निर्धनाः सर्व एव ते । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति तदपि शिल्पाद्यर्जितधनपरम् ॥ आधिवेदनिकादिष्वप्यस्वातन्त्र्यपरमिति तु युक्तम् ॥ अत एव मनुः (अ० ९ श्लो० १९९) । न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् । स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया इति । निर्हारो व्ययः ॥

पारिभाषिकस्त्रीधनस्वरूपम् ।

कस्मिंश्चिद्धने स्वातन्त्र्यमाह कात्यायनः । ऊढया कन्यया सार्धं पत्युः पितृगृहेऽथवा । भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥ सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते । यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥ सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् । विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥ भर्तृदत्ते स्थावरे तु न स्वातन्त्र्यम् । भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् । सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते इति नारदोक्तेः ॥ भर्त्रादीनां स्त्रीधने स्वातन्त्र्याभावमाह स एव । न भर्ता नैव च सुतो न पिता भ्रातरो न च । आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥ यदि त्वेकतरो येषां स्त्रीधनं भक्षयेद्बलात् । सवृद्धिकं स दाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥ तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् । मूलमेव स दाप्यः स्याद्यदा स धनवान् भवेत् ॥ मनुः (अ० ८ श्लो० २९। अ० ९ श्लो० २००) जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः । तान्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥ पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् । न तं भजेरन् दायादा भजमानाः पतन्ति त इति ॥ धृतो भर्त्रादिना तस्ये दत्तः स तया धृत इत्यर्थः ॥ देवलः । वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् । भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि ॥ वृथा मोक्षे च भोगे च स्त्रियै दद्यात्सवृद्धिकम् । पुत्रार्तिहरणे वापि स्त्रीधनं भोक्तुमर्हति ॥ वृत्तिर्जीवनार्थं पित्रादिदत्तं धनम् । लाभो वृद्धिः । मोक्षस्त्यागो दानमिति

स्त्रीधने भर्त्रादीनामस्वातन्त्र्यम् ।

तदपवाद भर्तृदाने विकल्प ।

(१) वी० प० २६६ पृ० १ क० वि०
(२) वी० प० २६४ पृ० २, व्य० मा०
(३) 'भयपवाधना स्मृता' इति वीरमित्रोदये
(४) वी० प० २६४ पृ० २
(५) वी० प० २६६ पृ० २
(६) मि० व्य० प० ६२ पृ० २, वी० प० २६६ पृ० १; व्य० मा०, क० वि०.
(७) मि० व्य० प० ४० पृ० १; वी० प० २६६ पृ० २; व्य० मा०, क० वि०
(८) 'दमौ' इति माधवे
(९) वी० प० २६६ पृ० २, व्य० मा० क० वि०.
(१०) मि० व्य० प० ६१ पृ० १, क० वि०.
(११) 'वृद्धि' रिति स्मृतिचन्द्रिकोक्तः पाठः, 'वृत्ति' रिति तु मदनरत्नोक्तः पाठ इति वीरमित्रोदये
(१२) वी० प० २६६ पृ० २, क० वि०.

यावत् । पुत्रपद कुटुम्बोपलक्षकम् ॥ याज्ञवल्क्य (व्य० श्लो० १४७) दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके ॥ गृहीत स्त्रीधन भर्ता नाकामो दातुमर्हति ॥ अत्र भर्तृग्रहणात्तद्भिन्नेन दुर्भिक्षाद्यापद्यपि स्त्रीधन न ग्राह्यमित्युक्तम् । धर्मकार्यमावश्यकम् । सम्प्रतिरोधके बन्धने ॥ कश्चिदकामो दद्यादित्याह देवल । अथ चेत्स द्विभार्य स्यान्न च ता भजते पुन । प्रीत्या निसृष्टमपि च प्रतिदाप्यश्च तद्बलात् ॥ 5 ग्रासाच्छादनवासानामाच्छेदो यत्र योषित । तत्र स्वमाददीत स्त्री विभाग रिक्थिनस्तदा ॥ रिक्थिन सकाशादित्यर्थ ॥ इदं च साध्वीपरम् । दुष्टा तु न विभागमर्हति ॥ तथा च स एव । अपकारक्रियायुक्ता निर्मर्यादाऽर्थनाशिका । व्यभिचाररता या च स्त्रीधन न च साऽर्हति ॥ स एव । यज्ञार्थं द्रव्यमुत्पन्न तस्माद्द्रव्य नियोजयेत् । स्थानेषु धर्मयुक्तेषु न स्त्रीमूर्खविधर्मिषु ॥ 10

स्त्रीधनाधिकारिण ।

स्त्रीमरणोत्तरमन्वाधेयादिस्त्रीधनग्रहणेऽधिकारिव्यवस्थामाह मनु (अ० ९ श्लो० १९५) । अन्वाधेय च यद्दत्त पत्या प्रीतेन चैव यत् । पत्यौ जीवति वृत्ताया प्रजायास्तद्धन भवेत् ॥ प्रजा विशिनष्टि स एव । (अ० ९ श्लो० १९२) जनन्यां संस्थितायां तु समं सर्वे सहोदरा । भजेरन् मातृक रिक्थ भगिन्यश्च सनाभय ॥ यत्र दुहित्राद्यभावेन पुत्राणामेव साहित्येनाधिकार प्राप्तस्तत्र तत्साहित्यम् । यत्र तु कन्यानामेवाधिकार प्राप्तस्तत्र तत्साहित्यमनूद्यते । न तु कन्यापुत्रयो परस्परमप्राप्त साहित्य विधीयत इति मिताक्षरादय (व्य० प० ६३ पृ० २) ॥ परे त्वन्वाधेयभर्तृप्रीतिदत्तविषये कन्यापुत्रयोरपूर्वं साहित्य विधीयत इत्याहु ॥

भगिनीषु विशेषमाह मनु । स्त्रीधनं स्यादपत्याना दुहिता च तदंशिनी । अप्रत्ता 20 चेत्समूढा तु लभते मानमात्रकम् ॥ तदंशिनी पुत्रसमांशिनी । अप्रत्ताऽविवाहिता । तस्या सत्त्वे ऊढा मानमात्र किञ्चिन्मात्र लभत इत्यर्थ ॥ अप्रत्ताऽभावे सधवाना भ्रातृसमोंऽश । भगिन्यो बान्धवै सार्धं विभजेरन् सभर्तृका इति कात्यायनोक्ते ॥ दौहित्रीभ्योऽपि किञ्चिद्देयम् । यास्तासा स्युर्दुहितरस्तासामपि यथार्हत । मातामह्या धनात्किञ्चित्प्रदेय प्रीतिपूर्वकमिति मनूक्ते (अ० ९ श्लो० १९३) ॥ 25

यौतक त्वनूढानामेव न पुत्राणाम् ॥ तथा च स एव ॥ मातुस्तु यौतक यत्स्यात्कुमारीभाग एव स ॥ यौतक विवाहादिसमये पत्या सहैकासने प्राप्त युतयोर्यौतकमिति निघण्टूक्तेरिति मदन ॥

---

(१) वी० प० २१६ पृ० १, क० लि०
(२) वी० प० २१५ पृ० २
(३) मि० व्य० प० ६० पृ० २ वी० पृ० २१७ पृ० १ क० लि०
(४) वी० प० २१६ पृ० २, क० लि०
(५) मि० व्य० प० ६१ पृ० २, क० लि०, वी० प० २१६ पृ० १
(६) वी० प० २१६ पृ० २, व्य० मा० क० लि० [illegible] माधवकमलाकरेषु क० लि० [illegible] मयूखपुस्तके च लिखितम् ।
(७) वी० प० २१६ पृ० २
(८) मि० व्य० प० ६१ पृ० २, वी० प० २१६ पृ० २ क० लि०
(९) वी० प० २१६ पृ० २ क० लि० व्य० मा० [illegible]

अन्वाधेयभर्तृप्रीतिदत्तभिन्ने पूर्वोक्ते पारिभाषिके स्त्रीधने तु विशेषमाह गौतमः । स्त्रीधनं दुहितृणामप्रत्तानामप्रतिष्ठितानां च(१) ॥ अप्रतिष्ठिता निर्धनाः ॥ ब्राह्मणी कन्या तु सपत्नीमातुरपि धनं गृह्णीयादित्याह मनुः (अ० ९ श्लो० १९८)। स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन ॥ ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥
5 वाकारश्चार्थे तेन विभज्येति लभ्यते ॥ ब्राह्मणीपदं समोत्तमजातिकन्योपलक्षकमिति केचित् ॥ मानं तु तत्र चिन्त्यम् ॥

दुहितृणामभावे दुहितृसन्ततिः ॥ मातुर्दुहितरोऽभावे दुहितृणां तदन्वय इति नारदोक्तेः ॥ भिन्नमातृकाणां दुहितॄणां दौहित्राणां चानेकपितृकाणां तु पितृतो भागकल्पनेति न्यायेनांशकल्पना ॥ यत्तु याज्ञवल्क्यः (व्य० श्लो० ११७) मातुर्दुहितरः
10 शेषमृणात्ताभ्य ऋतेऽन्वय इति तत्राप्यन्वयपदं कन्यासन्ततिपरमिति केचित् ॥ परे तु दुहित्रभावे पुत्रा एव गृह्णीयुः नारदीये तदा मातुरेव परामर्शादित्याहुः ॥ आचारसंवादी चायं पक्षः ॥ शेषमृणादिति ऋणसमं तन्न्यूनं वा पुत्रा एव गृह्णीयुरिति साम्प्रदायिकाः ॥

दुहित्रादीनामभावे पुत्रपौत्राद्या गृह्णीयुः ॥ दुहितृणामभावे तु रिक्थं पुत्रेषु तद्भवे-
15 दिति कात्यायनोक्तेः ॥ अयं दुहित्रादीनां मातृधनाधिकारोऽध्यग्न्यध्यावाहनिकमित्यादिपूर्वोक्तपारिभाषिकस्त्रीधन एव ॥ मातृस्वामिकधनमात्रपरत्वे परिभाषावैयर्थ्यम् ॥ तेन स्त्रीधनं स्यादपत्यानाम् स्त्रीधनं दुहितृणामित्यादीनि पूर्वोक्तानि स्त्रीधनपदवन्ति बृहस्पतिगौतमादिवचनानि पारिभाषिकपराण्येव ॥ यानि तु स्त्रीधनपदाभावेऽप्येकार्थकानि भजेरन्मातृकं रिक्थमित्यादीनि तान्यप्येतत्पराण्येव । एकमूलकल्प-
20 नालाघवात् ॥ यत्तु विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं सममिति याज्ञवल्क्योक्तं तत्पारिभाषिकातिरिक्तविभागकर्तनादिलब्धपरम् ॥ तेन पारिभाषिकातिरिक्तं मातृधनं दुहितृसत्त्वे पुत्रादय एव लभेरन् ॥

उभयविधसन्तत्यभावे तु पारिभाषिकस्त्रीधनं प्रकृत्य विशेषमाह याज्ञवल्क्यः (व्य० श्लो० १४४)। अतीतायामप्रजासि बान्धवास्तदवाप्नुयुः ॥

25 विवाहभेदेन बान्धवव्यवस्थामाह स एव (व्य० श्लो० १४५)। अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि । दुहितृणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥ भर्तुरभावे तत्कुले तस्याः प्रत्यासन्नो लभते पित्रभावे च पितृकुले तस्याः प्रत्यासन्नः । अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति मनुना (अ० ९ श्लो० १८७) मृतनिरूपिताया एव प्रत्यासत्तेर्धनाधिकारितावच्छेदकत्वेनाभिधानात् ॥ यत्तु मिताक्षरायाम्

---

(१) मि० व्य० प० ६२ पृ० १, वी० प० २१७ पृ० १, क० वि०, व्य० मा०

(२) मि० व्य० प० ६२ पृ० २, वी० प० २१७ पृ० २, क० वि०, व्य० मा०

(३) मि० व्य० प० ६३ पृ० १, वी० प० २१७ पृ० १, क० वि०.

(४) वी० प० २१७ पृ० १

(५) विज्ञानेश्वरादीनामयमेव पक्ष इष्टः कमलाकरस्य त्वपर ।

(६) तच्छब्देनेत्यर्थः ।

(७) वी० प० २१७ पृ० १, क० वि०.

(८) जी० दा० प० १६१.

(९) वी० प० २१८ पृ० २, क० वि०, व्य० मा०.

( व्य० प० ६३ पृ० १ ) भर्त्रभावे तत्प्रत्यासन्नाना सपिण्डाना पित्रभावे च तत्प्रत्यासन्नाना सपिण्डानामिति तत्रापि तेनास्या प्रत्यासन्नास्तत्प्रत्यासन्नास्तद्द्वारा तत्कुले प्रत्यासन्ना इति यावदित्येव व्याख्येयम् ॥ ब्राह्मादिषु चतुर्ष्वपीति विप्रपरम ॥ तेषामेव तत्प्रति धर्म्यत्वात् ॥ यस्य तु क्षत्रियादेर्गान्धर्वोऽपि धर्म्यस्तस्य तद्दूढाधनमपि भर्तुरेव ॥ तथा च मनु (अ० ९ श्लो० १९६।१९७ ) ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् । 5
अतीतायामप्रजसि भर्तुरेव तदिष्यते ॥ यत्त्वस्यै स्याद्धन दत्त विवाहेष्वासुरादिषु ।
अतीतायामप्रजसि मातापित्रोस्तदिष्यते ॥

ब्राह्मादिविवाहेषु भर्तुरभाव आसुरादिषु च पित्रोरभावे पारिभाषिकस्त्रीधनेऽधिकारिण आह बृहस्पति । मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा । श्वश्रू पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता ॥ यदासामौरसो न स्यात्सुतो दौहित्र एव वा । 10
तत्सुतो वा धन तासा स्वस्त्रीयाद्या समाप्नुयु ॥ दुहितृदौहित्र्योरप्यभावोऽत्र बोध्य ।
तदभाव एवौरसदौहित्रयोरधिकारात् ॥

आसुरादिविवाहेषु बन्धुदत्तेषु कात्यायन । बन्धुदत्त तु बन्धूनामभावे पुत्रगामि तत् ॥

शुल्कविषये तु गौतम । भगिनीशुल्क सोदर्याणामूर्ध्वं मातुरिति ॥ यत्तु शङ्ख 15
शुल्क च स्वपर्वेदिति तद्विवाहात्प्राक्कृताया बोध्यम् ॥ अत्र विशेषमाह याज्ञवल्क्य (व्य० श्लो० १४६ ) । मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् ॥ पूर्वं दत्त शुल्के मृतायां कन्यायां स्वस्य तस्या पितुश्च व्ययादवशिष्ट भर्ता गृह्णीयादित्यर्थ ॥ कश्चिद्विशेषमाह बौधायन ॥ रिक्थ मृताया कन्याया गृह्णीयु सोदरा समम् । तदभावे तु तन्मातुस्तदभावे पितुर्भवेदिति ॥ इद विवाहात्प्राक्कृताया वाग्दानकालीनमातामहा- 20
दिदत्तालङ्कारादिविषयमिति साम्प्रदायिका ॥

## ॥ अथानशा ॥

**याज्ञवल्क्य** (व्य० श्लो० १४० ) । क्लीबोऽथ पतितस्तज्ज पङ्गुरुन्मत्तको जड । अन्धोऽचिकित्स्यरोगश्च भर्तव्या स्युर्निरंशका ॥ तज्ज पतितोत्पन्न ।
विभागोत्तरमौषधादिना पुस्त्वादियुक्तास्त्वशं लभन्त एव विभक्तोत्पन्नवत् ॥ मनु । 25
(अ० ९ श्लो० २०१ )। अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रिया ॥ निरिन्द्रिया घ्राणादिरहिता ॥ नारद । पितृद्विट्
पतित षण्ढो यश्च स्यादपपात्रित । औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजा कुत ॥
दीर्घतीव्रामयग्रस्ता ये जडोन्मत्तपङ्गव । भर्तव्या स्यु कुलस्यैते तत्पुत्रास्त्वंशभा-

---

(१) वी० प० २११ पृ० १, क० वि० व्य० मा०
(२) वी० प० २११ पृ० २ क० वि० व्य० मा०
(३) मि० व्य० प० ६३ पृ० १, वी० प० २११ पृ० १, क० वि० व्य० मा०
(४) व्य० मा०
(५) क० वि० व्य० मा०, वी० प० २११ पृ० १
(६) वी० प० २३१ पृ० १ क० वि०, व्य० मा०
(७) वी० प० २३१ पृ० २ क० वि० व्य० मा०

गिनः ॥ अपपात्रितः राजद्रोहाद्यपराधेन बन्धुभिर्घटस्फोटादिना बहिष्कृत इति मदनः । व्यवसायार्थं नावादिना समुद्रमध्ये द्वीपान्तरंगन्तेति तु युक्तम् । द्विजस्याब्धौ तु नौयातुः शोधितस्याप्यसङ्ग्रह इति तस्य कलौ संसर्गनिषेधात् । राजद्रोहादौ घटस्फोटबहिष्कारयोरविधानाच्च ॥ शङ्खलिखितौ[1] । अपपात्रिते रिक्थपिण्डोदकानि व्यावर्तन्त इति[2] ॥ वसिष्ठः । अनंशास्त्वाश्रमान्तरगता इति[3] ॥ नैष्ठिकब्रह्मचारिवानप्रस्थयतय इत्यर्थः ॥ कात्यायनः । अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते । प्रव्रज्यावसितश्चैव न रिक्थं तेषु कर्हिचित्[4] ॥ सगोत्रादिति सगोत्रेणोढायां तस्माज्जात इत्यर्थः । अक्रमोढासुतः क्षेत्रजकानीनादिरिति केचित् ॥ ज्येष्ठायां कन्यायामपरिणीतायां कनिष्ठा कृतविवाहा चेत्तदा ते द्वे अपि अक्रमोढाशब्देनोच्येते इति तु युक्तम् ॥ तस्य पितृसवर्णत्वेऽशभाक्त्वमाह स एव ॥ अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः । असवर्णाप्रसूतश्च क्रमोढाया च यो भवेत्[5] ॥ प्रतिलोमप्रसूतायां भर्त्राप्युत्पन्नः पुत्रो नांशभाक् ॥ तथा च स एव । प्रतिलोमप्रसूतायास्तस्याः पुत्रो न रिक्थभाक् । ग्रासाच्छादनमत्यन्तं देयं तद्बन्धुभिर्मतमिति[6] ॥

गुणवत्पुत्रान्तरसत्त्वे दुर्वृत्तस्यांशानर्हतामाह मनुः (अ० ९ श्लो० २१४)। सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनमिति ॥ बृहस्पतिः । सवर्णाजोऽप्यगुणवान्नार्हः स्यात्पैतृके धने । तत्पिण्डदाः श्रोत्रिया ये तेषां तत्तु विधीयते ॥ उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः । अतस्तु विपरीतेन तेन नास्ति प्रयोजनम्[7] ॥

एते चानंशा रिक्थग्राहिभिर्यावज्जीवं पोषणीयाः । सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिभिः । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेदिति मनूक्तेः (अ० ९ श्लो० २०२) ॥ अत्यन्तं यावज्जीवम् । भर्तव्यास्ते निरंशका इति पूर्वोक्तयाज्ञवल्क्योक्तेश्च ॥ आश्रमान्तरगतपतिततत्पुत्रास्तु न भर्तव्याः ॥ तथा च वसिष्ठः । अनंशास्त्वाश्रमान्तरगताः क्लीबोन्मत्तपतिताश्च ॥ भरणं क्लीबोन्मत्तानामिति[8] ॥ अत्र द्वयोर्भरणे श्रवणमितरयोः परिसङ्ख्यार्थम् ॥ देवलः । मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः । पतितस्तदपत्यं च लिङ्गी दायांशभागिनः ॥ तेषां पतितवर्ज्येभ्यो भक्तवस्त्रं प्रदीयते ॥ लिङ्गी निषिद्धलिङ्गधारी ॥ बौधायनः । अतीतव्यवहारान्ग्रासाच्छादनैर्बिभृयुरन्धजडक्लीबव्यसनिव्याधितांश्चाकर्मिणः पतिततज्जवर्जमिति ॥ सन्न्यासच्युततत्पुत्रावपि न भरणीयाविति मदनादयः ॥

अनंशपुत्रास्तु निर्दोषा भागं लभन्त एव ॥ तेषामेवौरसाः पुत्रा भागहारिणो न तु पतितस्य पतनीये कर्मणि कृतेऽनन्तरोत्पन्ना प्रातिलोम्यासु स्त्रीषूत्पन्नाश्चाभागि-

(१) वी० प० २११ पृ० २, क० वि०, व्य० मा०
(२) हेमाद्रावादित्यपुराण इत्युपक्रम्य निर्णयसिन्धावुपन्यस्तम् (परि० ३ पूर्वार्धे प० ६२ पृ० २)
(३) क० वि०, वीरमित्रोदये त्वापस्तम्ब इत्युपक्रम्य 'अपपात्रितस्य रिक्थपिण्डोद- [illegible] प० २२२ पृ० १
(४) मि० व्य० प० ६१ पृ० २, वी० प० २२१ पृ० २, क० वि०, व्य० मा०
(५) वी० प० २२१ पृ० ६, क० वि० व्य० मा०.
(६) वी० प० २२२ पृ० १, क० वि०.
(७) वी० प० २२१ पृ० २, क० वि०
(८) क० वि०

नस्तत्पुत्रा पैतामहेऽप्यर्थ इति विष्णूक्तेः औरसा क्षेत्रजास्तेषां निर्दोषा भागहारिण इति याज्ञवल्क्योक्तेश्च ( व्य० श्लो० १४१ ) ॥

तत्कन्यासु पत्नीषु च विशेषमाह याज्ञवल्क्यः ( व्य० श्लो० १४१।१४२ )। सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ॥ अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः। निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ व्यभिचारे बहिर्निष्कासनमपोषणं च। प्रातिकूल्ये बहिर्निष्कासनमेव। भरणं तु कार्यमेवेति मदनादयः ॥ 5

॥ इति दायविभागः ॥

---

## ॥ अथ ऋणादानम् ॥

तत्र धनिकस्य प्रयोगप्रकारमाह बृहस्पतिः। परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम्। लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥ 10

ऋणादानम्।

यावत्तावकमृणं न शोध्यते तावदेतद्गृहक्षेत्रादेर्दानविक्रयाधिकरणादेर्न करिष्यामीति निर्बन्धो बन्धः। लग्नकः प्रतिभूः॥ स एव। कुत्सितात्सीदतश्चैव निर्विशङ्कैः प्रगृह्यते। चतुर्गुणं चाष्टगुणं कुसीदाख्यमतः स्मृतम् ॥ कात्यायनः। ऋणिकेन तु या वृद्धिरधिका संप्रकल्पिता। आपत्कालकृता नित्यं दातव्या कारिता तु सा ॥ प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृतेति॥ प्रतिकालं प्रतिदिनं प्रतिमासं प्रतिवर्षं चेत्यर्थः ॥ याज्ञवल्क्यः ( व्य० श्लो० ३७ )। अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके। वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥ अन्यथा अबन्धके ॥ व्यासः। सबन्धे भाग आशीतः षाष्टो भागः सलग्नके। निराधाने द्विकशतं मासलाभ उदाहृतः ॥ याज्ञवल्क्यः ( व्य० श्लो० ३८ )। कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्। दद्युरि- 20 त्युत्तरवाक्यस्यस्यानुषङ्गः। दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु॥ विष्णुः। यो गृहीत्वा ऋणं सर्वं श्वो दास्यामीति सामकम्। न दद्याल्लोभतः पश्चात्तद्दिनाद्वृद्धिमाप्नुयात् ॥ याचिते वृद्धिमाह कात्यायनः। यो याचितकमादाय तमदत्त्वा दिशं व्रजेत्। ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥ कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत्। ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥ स्वदेशेऽवस्थितो यस्तु न दद्या- 25 द्याचितः क्वचित्। तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत् ॥ नारदः। न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित्। अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते ॥ कात्यायनः। प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम्। याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥ पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत्। ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धि-

नव वृद्धिः।

---

(१) वी० प० २२९ पृ० २ क० वि० व्य० मा०
(२) वी० प० २२२ पृ० १ क० वि० व्य० मा०
(३) वी० प० ९० पृ० १ क० वि० व्य० मा०
(४) वी० प० ९१ पृ० १ क० वि०
(५) वी० प० ९१ पृ० २; क० वि०, व्य० मा०
(६) वी० प० ९१ पृ० १ क० वि० व्य० मा०
(७) मि० व्य० प० ६८ पृ० १ वी० प० ९१ पृ० १ क० वि० व्य० मा०

माप्नुयात् ॥ निक्षिप्तं वृद्धिशेषं च क्रयं विक्रयमेव च । याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥ नारदः । पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः । वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥ आक्षिकोऽक्षक्रीडासम्बन्धी । अविवक्षिता अपरिभाषिताः ॥ याज्ञवल्क्यः (व्य० श्लो० ४४) । दीयमानं न गृह्णाति प्रयुक्तं यस्स्वकं
5 धनम् । मध्यस्थस्थापितं तत्स्याद्वर्धते न ततः परम् ॥ बृहस्पतिः । हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके । धान्ये चतुर्गुणा प्रोक्ता शदवाह्यलवेषु च ॥ शदः पुष्पमूलफलादिः । वाह्यो बलीवर्दादिः । लवो मेषोर्णाचमरीकेशादिः ॥ यत्तु मनुः (अ० ८ श्लो० १५१) धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चतामिति तत्पाङ्गुण्यादिनिषेधपरम् ॥ कात्यायनः । मणिमुक्ताप्रवालानां सुवर्णरजतस्य च । तिष्ठ-
10 ति द्विगुणा वृद्धिः फलकैटानिकस्य तु ॥ कैटं कीटप्रभवं पट्टदुकूलतसरीवस्त्रादि ॥ वसिष्ठः । ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च । त्रिगुणा तिष्ठतो वृद्धिः कालाधिक्यकृतस्य तु ॥ व्यासः । शाककार्पासबीजेषु पञ्चगुणा परिकीर्तिता ॥ कात्यायनः । तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् । वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य तु ॥ विष्णुः । हिरण्यस्य द्विगुणा वृद्धिस्त्रिगुणा वस्त्रस्य धान्यस्य चतुर्गुणा
15 रसस्याष्टगुणा सन्ततिः स्त्रीपशूनामिति पुष्पमूलफलानि च तुलाधृतमष्टगुणमिति ॥ नारदः । ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः । देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते ॥ सार्वभौमः सार्वत्रिकः ॥ इदं च द्वैगुण्यादि सकृत्प्रयोग एव ॥ कालान्तरेण पुरुषान्तरेण तत्रैव रेकसेकादिना वा प्रयोगान्तरे तु परमवृद्धेरप्याधिक्यं भवति । तथा च मनुः (अ० ८ श्लो० १५१) । कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता ॥
20 एकप्रयोगमध्येन्तरान्तरा गृह्यमाणेऽपि परमवृद्धेरप्याधिक्यमिति साम्प्रदायिका विज्ञानेश्वरादयः (मि० व्य० प० १८ पृ० २) ॥

**अथाधिविधि** ॥ बृहस्पतिः । आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः । जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥ नारदः । अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः । कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ॥ हारीतः ॥ बन्धं यथा स्थापितं स्यात्तथैव परिपालयेत् । अन्यथा नश्यते लाभो मूलं नश्येद्व्यतिक्रमात् ॥ व्यतिक्रमे आधिनाशः ॥ याज्ञवल्क्यः (व्य० श्लो० ५९) । गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापित इति ॥

आधि । तद्भेदा । (25)

---

(१) वी० प० ९३ पृ० १, क० वि०, व्य० मा०
(२) मि० व्य० प० १८ पृ० १, वी० प० ९३ पृ० २, क० वि०, व्य० मा०
(३) वी० प० ९४ पृ० १, क० वि०, व्य० मा०
(४) वी० प० ९३ पृ० १, क० वि०
(५) वी० प० ९३ पृ० १, क० वि०, व्य० मा०, मि० व्य० प० १८ पृ० २
(६) वी० प० ९३ पृ० २, क० वि०
(७) वी० प० ९३ पृ० २, क० वि०, व्य० मा०
(८) 'क्षौ' इति पाठो वीरमित्रोदयादिषु
(९) वी० प० ९३ पृ० १, व्य० मा०
(१०) वी० प० ९३ पृ० २
(११) मि० व्य० प० १८ पृ० २, वी० प० ९३ पृ० २.
(१२) वी० प० ९४ पृ० १
(१३) मि० व्य० प० २४ पृ० १, वी० प० ९४ पृ० २, क० वि०, व्य० मा०
(१४) वी० प० ९४ पृ० २, क० वि०, व्य० मा०
(१५) वी० प० ९५ पृ० १, क० वि०

दापिते उपकाराक्षमतां नीत इत्यर्थः ॥ कात्यायनः । अकाममननुज्ञातमाधिं यः कर्म

आधिभोगे ।

कारयेत् । भोक्ता कर्मफलं दाप्यो वृद्धिं वा न लभेत सः ॥ कर्म कारयेदुपयुञ्जीत । कर्मफलं भाटकम् ॥ याज्ञवल्क्यः (व्य० श्लो० ५९)। नष्टो देयो विनष्टश्चेद्दैवराजकृतादृते ॥ नष्टो विकृतिं गतः पूर्ववत् कृत्वा देय ॥ बृहस्पतिः । भुक्ते त्वसारतां प्राप्ते मूलहानिः प्रजायते ॥ आधेर्विनाशे तन्मूल्यं दातव्यमित्याह व्यासः । मही-

आधिनाशे मूल्यदानम् ।

नृदोपाभ्रष्टश्चेद्वन्धो हेमादिको भवेत् । ऋणं सलाभं संशोध्य तन्मूल्यं दापयेद्धनी ॥ नारदः । विनष्टे मूलनाशः स्याद्दैवराजकृतादृते ॥ मनुः (अ० ८ श्लो० १४४)। मूल्येन तोपयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥ बृहस्पतिः । दैवराजोपघातेन यत्राधि-

नष्टवाद ।

र्नाशमाप्नुयात् । तत्राधिं दापयेद्दाप्यः सोदयं वा धनं ऋणी ॥ व्यासः । दैवराजोपघाते तु न दोषो धनिनः क्वचित् ॥ कात्यायनः । न चेद्धनिकदोषेण विपत्तिर्वा म्रियेत वा । आधिमन्यं स दाप्यः स्याद्दृणान्मुच्येत नर्णिकः ॥ याज्ञवल्क्योऽपि (व्य० श्लो० ६०)। आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम् । यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥ नारदः । आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा । सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥ वसिष्ठोऽपि । तुल्यकाले निसृष्टानां लेख्यानामाधिकर्मणि । येन भुक्तं भवेत्पूर्वं तस्याधिर्बलवत्तरः ॥ स एव । यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ । विभज्याधिं समस्तत्र भोक्तव्य इति निश्चयः ॥ कात्यायनः । आधिमेकं द्वयोर्यस्तु कुर्यात्तं प्रति यद्भवेत् । तयोः पूर्वकृतं ग्राह्यं तत्कर्ता चौरदण्डभाक् ॥ याज्ञवल्क्यः (व्य० श्लो० ५८)। आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते । काले कालकृतो

[illegible] ।

नश्येत्फलभोग्यो न नश्यति ॥ बृहस्पतिः । हिरण्ये द्विगुणीभूते पूर्णे काले धृतावधौ । बन्धकस्य धनी स्वामी द्विपक्षाहं प्रतीक्ष्य तु ॥ व्यासः । गोप्याधिर्द्विगुणादूर्ध्वं कृतकाल कृतावधेः । आवेद्य पित्र्यर्णिकुले भोक्तव्यस्तदनन्तरम् ॥ बृहस्पतिः । हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके । द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥ याज्ञवल्क्यः (व्य० श्लो० ६१)। चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् । सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ धनिकविश्वासेनाल्पद्रव्यार्थमतिबहुमूल्यं स्थापितश्चेदृणिकविश्वासेन वाल्पमूल्योऽपि बहुद्रव्यार्थं स्थापितश्चेच्चरित्रबन्धकम् ॥ अथवा चरित्रं गङ्गास्नानादिपुण्यमाधीकृतं चरित्रबन्धकम् ॥ एतदुभयविधमपि चरित्रबन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति । द्विगुणीभूतमपि द्रव्यमेव देयं नाधिनाश इति । सत्यङ्कारकृतं तदपि द्विगुणीभूते

(१) वी० प० ९९ पृ० २, क० लि०
(२) वी० प० ९९ पृ० १, क० लि०
(३) वी० प० ९९ पृ० २, क० लि०, स्म० मा०
(४) वी० प० ९९ पृ० २, क० लि०, स्म० मा०
(५) वि० म्य० प० १९ पृ० १, वी० प० ९९ पृ० २, क० लि०
(६) वी० प० ९९ पृ० २, स्म० मा०
(७) वी० प० ९९ पृ० १, क० लि०, स्म० मा०
(८) वी० प० १०० पृ० १ क० लि०
(९) वी० प० १०० पृ० १ क० लि०
(१०) वी० प० १०० पृ० २
(११) वी० प० १०८ पृ० २, क० लि०

द्रव्ये न नश्यतीत्यर्थ ॥ स एव (व्य० श्लो० ६२।६३) । उपस्थितस्य मोक्तव्य आधि स्तेनोऽन्यथा भवेत् । प्रयोजके ऽसति धन कुलेऽन्यस्याधिमाप्नुयात् ॥ तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिक ॥ उत्तमर्णेऽसन्निहिते तस्य कुले ऽन्यस्य हस्ते सवृद्धिक धन दत्त्वाधिर्ग्राह्य । आधिविक्रयेण तु धनदित्सायां तत्काल मूल्यं कृत्वा वृद्धिरहित स्थाप्य इत्यर्थ ॥ बृहस्पति । क्षेत्रादिक यदा भुक्तमुत्पन्नमधिक तत. । मूलोदय प्रविष्ट चेत्तदाधि प्राप्नुयादृणी ॥ याज्ञवल्क्य (व्य० श्लो० ६४) । यदा तु द्विगुणी भूतमृणमाधौ तदा खलु । मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥

अथ प्रतिभू ॥ तच्चैविध्यमाह याज्ञवल्क्य (व्य० श्लो० ५३) । दर्शने प्रत्यये दाने प्रातिभाव्य विधीयते ॥ प्रत्यय समीचीनोऽयमित्युक्त्वा विश्वासोत्पादनम् ॥ बृहस्पतिस्तु चातुर्विध्यमाह । आहैको दर्शयामीति साधुरित्यपरोऽब्रवीत् । दाताहमेतद्द्रविणमर्पयामीति चापरे ॥ अर्पयामि दापयिष्यामीत्यर्थ ॥ कात्यायन । नष्टस्यान्वेषणार्थं तु देय पक्षत्रय परम् । यद्यसौ दर्शयेत्तत्र मोक्तव्य प्रतिभूर्भवेत् ॥ पक्षत्रयमित्युपलक्षणम् । यावान्कालोऽपेक्षितस्तावन्त दद्यादित्यर्थ ॥ कात्यायन । दर्शनप्रतिभूर्यस्त देशे काले न दर्शयेत् । निबन्धमावहेत्तत्र दैवराजकृताद्दृते ॥ निबन्धमावहेद्वनिक द्रव्य दद्यात् ॥ बृहस्पति । आद्यौ तु वितथे दाप्यौ तत्कालविदित धनम् । उत्तरौ तु विसवादे तौ विना तत्सुतौ तथा ॥ कात्यायन । प्रातिभाव्यागत पौत्रैर्दातव्य न तु तत्क्वचित् । पुत्रेणापि सम देयमृण सर्वत्र पैतृकम् ॥ व्यासोऽपि । ऋण पैतामह पौत्र प्रातिभाव्यागत सुत । सम दद्यात्तत्सुतौ तु न दाप्याविति निश्चय ॥ पैतामहमृण पौत्रो मूलमात्र दद्यात्प्रातिभाव्यागत सुतोऽपि मूलमात्र दद्यात् ॥

प्रतिभूत पुत्रादिभिर्ऋणदाने ।

इद तु द्रव्यमगृहीत्वा प्रातिभाव्याङ्गीकारे ॥ द्रव्यग्रहणे प्रातिभाव्याङ्गीकारे तु पुत्रपौत्राभ्यामपि सवृद्धिक देयम् ॥ तथाच कात्यायन । गृहीत्वा बधक यत्र दर्शनेऽस्य स्थितो भवेत् । विना पितृधनात्तस्माद्दाप्य स्यात्तदृण सुत ॥ याज्ञवल्क्य ( व्य० श्लो० ५५) । बहव स्युर्यदि स्वांशैर्दद्यु प्रतिभुवो धनम् । एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ अहमेव सर्वं दास्यामीति प्रत्येक प्रतिज्ञा एकच्छाया तामाश्रितेष्वाप्तेष्वेषु धनिकेच्छया य कश्चिद्दद्यात् । अंशैर्दास्यामीति प्रतिज्ञायां

बहुषु प्रतिभूष्वेकेन दानम् ।

तु तथा देयमित्यर्थ ॥ कात्यायन । एकच्छायाप्रविष्टाना दाप्यो यस्तत्र दृश्यते । प्रोषिते तत्सुत सर्वं पित्र्यंशान्तु मृते सुत ॥ पित्र्यंशात्पित्र्यंशानुसारेण ॥ याज्ञवल्क्योऽपि (व्य० श्लो० ५६) । प्रतिभूर्दापितो

(१) वी० प० ९८ पृ० २ क० वि०, व्य० मा०
(२) वी० प० ९९ पृ० १ क० वि०, व्य० मा०
(३) वी० प० ९९ पृ० २ क० वि० व्य० मा०
(४) मि० व्य० प० २४ पृ० १ वी० प० १०० पृ० १ क० वि०, व्य० मा०
(५) वी० प० १०० पृ० १
(६) वी० प० १० पृ० २ क० वि० व्य मा०
(७) वी० प० १०० पृ० २ क० वि०
(८) मि० व्य० प० २१ पृ० २ वी० प० १०१ पृ० १, क० वि० व्य० मा०
(९) वी० प० १०१ पृ० १, क० वि० व्य० मा०
(१०) मि० व्य० प० २१ पृ० १ वी० प० १०१ पृ० १, क० वि०, व्य० मा०

यत्तु प्रकाशं धनिनां धनम् । द्विगुणं प्रतिदातव्यं ऋणिकैस्तस्य तद्भवेत् ॥ बृहस्पतिः । प्रातिभाव्यं तु यो दद्यात्पीडितः प्रतिभावितः । त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति ॥

प्रतिभुव ऋणिकेन मानदानम् ।

अथोत्तमर्णस्यर्णग्रहणप्रकारः ॥ बृहस्पतिः । प्रतिपन्नमृणं दाप्यः सामादिभिरुपक्रमैः । धर्मोपधिबलाकारैर्गृहसरोधनेन च ॥ प्रतिपन्नमधमर्णेनाङ्गीकृतम् । उपक्रमैरुपायैः ॥ तान् विवृणोति स एव । सुहृत्सुबन्धुसन्दिष्टैः सामोक्त्यानुगमेन च । प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः ॥ छद्मना याचितं चार्थमानीय ऋणिकाद्धनी । अन्वाहितादि सङ्गृह्य दाप्यते यत्र सोपधिः ॥ बद्धास्वगृहमानीय ताडनाद्यैरुपक्रमैः । ऋणिको दाप्यते यत्र बलात्कारः स उच्यते ॥ पुत्रदारपशून्बद्ध्वा कृत्वा द्वारोपवेशनम् । 10 यत्रर्णिको दाप्यतेऽर्थं तदाचरितमुच्यते ॥ अनुगमोऽनुसरणम् । प्रायः प्रार्थना । अन्वाहितम् यस्मै दापितुं दत्तमलङ्कारादि ॥ धर्माद्युपायानां नियममाह कात्यायनः । राजानं स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत् । रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेत् ॥ वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्भृगुः । देशाचारेण दाप्याः स्युर्दुष्टान्संपीड्य दापयेत् ॥ स एव । धार्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि । यावद्वा 15 तत्तदादेयं देशाचारस्थितिर्यथा ॥ अवरुद्धस्य विण्मूत्रशङ्कायामवरोधनं निषेधयति स एव ॥ विण्मूत्रशङ्का यत्र स्याद्धार्यमाणस्य देहिनः । पृष्ठतश्चानुगन्तव्यो निबन्धं वा समुत्सृजेत् ॥ निबन्धः स्वप्रतिनिधिभूतं पुत्रादिकम् ॥ अवरुद्धो दर्शनप्रतिभुवं गृहीत्वा मोक्तुं मोक्तव्य इत्याह स एव ॥ स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिने दिने । आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः ॥ यो दर्शनप्रतिभुवं नाधिगच्छेन्न वा 20 श्रयेत् । स चारके निरोद्धव्यः स्थाप्यो वाऽऽवेद्य रक्षिणः ॥ न चारके निरोद्धव्यः आर्यः प्रात्ययिकः शुचिः । सोऽनिबन्धः प्रमोक्तव्यो निबन्धः शपथेन वा ॥ न चाश्रयेन्न दद्यात् । चारके कारागारे । रक्षिणो रक्षकानावेद्य स्थाप्यः । प्रात्ययिको विश्वास्यः ॥ बृहस्पतिः । पूर्णावधौ शान्तलाभमृणमुद्राहयेद्धनी । कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया ॥ पूर्णावधौ द्वैगुण्यादिके जाते । अत एव शान्तलाभतोपपद्यते । धनी 25 ऋणमुद्राहयेत् गृह्णीयात् । वृद्धिमपि मूले प्रक्षिप्य तस्यापि वृद्धिकरणं चक्रवृद्धिः ॥ नारदः । अथ शक्तिविहीनः स्यादृणी कालविपर्ययात् । शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम् ॥ मनुः (अ० ८ श्लो० १७७) । कर्मणापि समं कुर्याद्धनिकस्याधमर्णिकः । समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥ यत्तु याज्ञवल्क्यः (व्य० श्लो०

उत्तमर्णस्य ऋणग्रहणप्रकारः ।

---

(१) वी प १०१२ २ क० वि० व्य० मा०
(२) वी० प० १०० पृ० १ क० वि०
(३) वी० प० १०३ पृ० १ क० वि० व्य० मा०
(४) वी० प० १०३ पृ० १
(५) वी० प० १०३ पृ० १
(६) वी प० १०३ पृ० २ क वि० सोऽनिबद्धः प्रमोक्तव्यो निबद्धः शपथेन वा इति वीरमित्रोदये सोऽनिबन्धः प्रमोक्तव्यो निबन्धः शपथेन वा इति कमलाकरे
(७) वी० प० १०४ पृ० १ क० वि०
(८) वी० प० १०४ पृ० २ क० वि०
(९) वी० प १०४ पृ० २ क वि० मि० व्य० प० १९ पृ० २

४२) हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्। ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथो-
दयमिति ॥ तत्र ब्राह्मणपदमुत्कृष्टजातिपरम्॥ स एव (व्य० श्लो० ४०)। प्रपन्नं साध-
यन्नर्थं न वाच्यो नृपतेर्भवेत्। साध्यमानो नृपं गच्छन् दण्ड्यो दाप्यश्च तद्धनम्॥
बृहस्पतिः। प्रतिपन्नस्य धर्मोऽयं व्यपलापी तु ससदि। लेख्येन साक्षिभिर्वापि भावयित्वा
5 प्रदाप्यते॥ न रोद्धव्यः क्रियावादी सन्दिग्धेऽर्थे कथञ्चन। आसेधयंस्तमासेध्य दण्ड्यो
भवति धर्मतः॥ आसेधो राजाज्ञयावरोधः॥ स एव। प्रदातव्यं यद्भवति न्यायतस्तददाप्य-
हम्। एवं यत्रर्णिको ब्रूते क्रियावादी स उच्यते॥ कात्यायनः। पीडयेत्तु धनी यत्र
ऋणिकं न्यायवादिनम्। तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दमम्॥ बृहस्पतिः। अना-
वेद्य तु राज्ञे यः सन्दिग्धेऽर्थे प्रवर्तते। प्रसह्य स विनेयः स्यात्स चाप्यर्थो न सिध्यति॥
10 यमः। ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति। राज्ञा दापयितव्यः स्याद्गृहीत्वा
द्विगुणं ततः॥ याज्ञवल्क्यः (व्य० श्लो० ४२)। राज्ञाऽधमर्णिको दाप्यः साधि-
तादृशकं शतम्॥ पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः॥ दशकः दशोत्त-
रम्। दशांशो विंशांशश्चेत्यर्थः। तत्रैतावंशो राज्ञोऽन्यदुत्तमर्णस्येति भावः॥ दश-
कग्रहणं निर्धनैकपरम्॥ सधने तु विशेषमाह नारदः। ऋणिकः सधनो यस्तु
15 दौरात्म्यान्न प्रयच्छति। राज्ञा दापयितव्यः स्याद्गृहीत्वांऽशं तु विंशकम्॥ शतमिति
विंशतिरित्यर्थः॥

अनेकोत्तमर्णानां युगपदुपस्थितौ क्रममाह याज्ञवल्क्यः (व्य० श्लो० ४१)।

ऋणदाने क्रमः। गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः। दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम्॥ विवादरत्नाकरे कात्यायनः। नानर्ण-
20 समवाये तु यद्यत्पूर्वकृतं भवेत्। तत्तदेवाग्रतो देयं राज्ञः श्रोत्रियतोऽनु च॥ एकाहे
लिखितं यत्र तत्र कुर्यादृणं समम्। ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम्॥ यस्य
द्रव्येण यत्पण्यं साधितं यो विभावयेत्। तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा॥
याज्ञवल्क्यः (व्य० श्लो० ९३)। लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम्।
धनी वोपगतं दद्यात्स्वहस्तपरिचिह्नितम्॥ नारदः। लेख्यं दद्याद्विशुद्धर्णे तदभावे
25 प्रतिश्रवः। धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम्॥ प्रतिश्रवः प्रतिदानश्रवणाय
शुद्धिपत्रम्॥ ऋणादानेऽधमर्णस्यानिष्टफलमाह कात्यायनः। उद्धारादिकमादाय
स्वामिने न ददाति यः। स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे॥ उद्धारः
ऋणम्। आदिना याचितनिक्षेपयोर्ग्रहणम्। दासो गर्भदासः। भृत्यो मूल्योपात्तः॥
नारदः। याच्यमानं न दद्याच्चेदृणं वापि प्रतिग्रहम्। तद्द्रव्यं वर्धते तावद्यावत्को-
30 टिशतं भवेत्॥ ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा। अश्वः खरो वृषो दासो

(१) वी० प० १०४ पृ० २ व्य० मा०
(२) वी० प० १०१ पृ० २
(३) वी० प० १०४ पृ० १ क० वि०
(४) वी० प० १०४ पृ० १
(५) मि० व्य० प० ९६ पृ० २ वी० प० १०४ पृ० १ व्य० मा०
(६) वी० प० १११ पृ० १ व्य० मा०
(७) नांण (क) (ख)
(८) वी० प० १०६ पृ० १ क० वि०
(९) जो (क) (घ) (ङ) (ट)
(१०) वी० प० ११० पृ० १ व्य० मा०
(११) वी० प० ११० पृ० २, व्य० मा०

भवेज्जन्मनि जन्मनि ॥ प्रतिग्रहं दातुं प्रतिश्रुतम् ॥ व्यासोऽपि । तपस्वी चाग्निहोत्री च ऋणवान्म्रियते यदि । तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनो भवेत् ॥

बृहस्पतिः । ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् । पैतामहं समं देयं न देयं तत्सुतस्य च ॥ याज्ञवल्क्यः (व्य० श्लो० ५०) । पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा । पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥ विंशतिवर्षवयसा पुत्रादिना ऋणं देयमित्याह नारदः । नार्वाक्संवत्सराद्विंशात्पितरि प्रोषिते सुतः । ऋणं दद्यात्पितृव्ये च ज्येष्ठे भ्रातर्यथापि वा ॥ कात्यायनः । विद्यमानेऽपि रोगार्ते स्वदेशात्प्रोषितेऽथवा । विंशात्संवत्सराद्देयमृणं पितृकृतं तथा ॥ प्रोषितपदं मृतस्याप्युपलक्षकम् ॥ अत एव विष्णुः । धनग्राहिणि प्रेते प्रव्रजिते द्विदश समाः प्रोषिते वा तत्पुत्रपौत्रैर्धनं देयम् ॥ नारदः । पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः । विभक्ता अविभक्ता वा यो वा तामुद्वहेद्धुरम् ॥ कात्यायनः । पितर्णे विद्यमाने तु न च पुत्रो धनं हरेत् । देयं तद्धनिके द्रव्यमृते पुनस्तु दाप्यते ॥ द्रव्यमृते इति शम्ब ध । द्रव्यं विनेत्यर्थः ॥ बृहस्पतिः । पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च । तयोः पैतामहं पूर्वं देयमेवमृणं सदा ॥

पुत्रपौत्राभ्यामृणदानम् ।

याज्ञवल्क्यः (व्य० श्लो० ४७) । सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् । वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ बृहस्पतिः । सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम् । प्रातिभाव्यं दण्डशुल्कशेषं पुत्रं न दापयेत् ॥ उशना ॥ दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा । न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥

नाप्याध्येयमृणम् ।

ऋणदानाधिकारिणां क्रममाह याज्ञवल्क्यः (व्य० श्लो० ५१) । रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च । पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥ क्लैब्यादिदोषयुक्ते पुत्रे विद्यमानेऽपि यो न्यायेन दोषाभावेऽप्यन्यायेन वा तत्पितृरिक्थं हरते स रिक्थग्राहः । एवमेव परस्त्रीहृत् योषिद्ग्राहः । अनन्याश्रितद्रव्यस्तूभयथापि । अन्याश्रितत्वरूपविशिष्टप्रतियोगिकाभावाद्द्रव्यरूपविशेषणमात्रप्रतियोगिकाभावाच्च ॥ अत्रादौ रिक्थग्राहः तदभावे योषिद्ग्राहस्तदभावेऽनन्याश्रितद्रव्यः पुत्रः तदभावे पौत्रो मूलमात्रं तदभावे प्रपौत्रपत्नीकन्यादयो रिक्थिनो द्रव्यग्राहिणश्चेद्दद्युरित्यर्थः ॥ रिक्थग्रहणाभावे प्रपौत्रेण पत्न्यादिभिश्च न देयम् । रिक्थं चाल्पमपि गृहीतं भूयसोऽपि ऋणापाकरणे प्रयोजकम् न तु तत्समं ततोऽधिकमेव वेति नियमः । पुत्रही

(१) वी० प० ११० पृ० २ क० वि०
(२) क० वि० व्य० मा०
(३) वी० प० १०५ पृ० २
(४) वी० प० १०५ पृ० १ क० वि०
(५) मि० व्य० प० २० पृ० २ वी० प० १०६ पृ० १ क० वि०
(६) वी० प० १०६ पृ० १ क० वि० व्य० मा०
(७) वी० प० १०६ पृ० १, क० वि०
(८) मि० व्य० प० २० पृ० १ वी० प० १०६ पृ० २ क० वि० व्य० मा० अत ऊर्ध्वं पितुः पुत्रा इति मिताक्षराकमलाकरयोः प्रथमपादः
(९) वी० प० १०६ पृ० २, व्य० मा०
(१०) वी० प० १०६ पृ० २, व्य० मा० क० वि०
(११) वी० प० १०६ पृ० १, व्य० मा० क० वि०
(१२) वी० प० १०६ पृ० १
(१३) मि० व्य० प० २० पृ० १ वी० प० १०६ पृ० २ क० वि०

नस्योत्तमर्णस्य रिक्थिनो द्रव्यग्रहणाधिकारिण पत्नीकन्यादय पत्न्यादीनामधमर्णादृण गृह्णीयुरित्यन्योऽन्तिमपादार्थ ॥ विष्णु । सपुत्रस्य वाप्यपुत्रस्य रिक्थग्राही ऋण दद्यादिति ॥ बृहस्पति । स्त्रीहारी च तथैव स्यादभावे धनहारिणे ॥ कात्यायन । ऋण तु दापयेत्पुत्र यदि स्यान्निरुपद्रव । द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥ पूर्वे दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम् । योषिद्ग्राह सुताभावे पुत्रे वात्यन्तनिर्धने ॥ नारद । या तु सप्रधनैव स्त्री सापत्या चान्यमाश्रयेत् ॥ सोऽस्या दद्यादृण भर्तुरुत्सृजेद्वा तथैव ताम् ॥ कात्यायन । निर्धनैरनपत्यैस्तु यत्कृत शौण्डिकादिभि । तत्स्त्रीणामपि भोक्ता तु दद्यात्तदृणमेव हि ॥ नारद । धनस्त्रीहारिपुत्राणामृणभाग्यो धन हरेत् । पुत्रोऽसतो स्त्रीधनिनो स्त्रीहारी धनिपुत्रयोरिति ॥ सधनपुत्राभावे स्त्रीहारी ऋण दद्यादित्यन्त्यपादार्थ । पूर्वोक्तयाज्ञवल्क्यवाक्यात् ॥ कात्यायन । प्रोषितस्यामतेनापि कुटुम्बार्थमृण कृतम् । दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगु ॥ याज्ञवल्क्य ( व्य० श्लो० ४६ ) । न योषित्पतिपुत्राभ्या न पुत्रेण कृत पिता । दद्यादृते कुटुम्बार्थान्न पति स्त्रीकृतं तथा ॥ कात्यायन । देय प्रतिश्रुत यत्स्यादद्यच स्यादनुमोदितम् ॥ नारद । कृतं वा यदृणं कृच्छ्रे दद्यात्पुत्रस्य वत्पिता ॥ याज्ञवल्क्य ( व्य० श्लो० ४८) । गोपशौण्डिकशैलूषरजकव्याधयोषिताम् । ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥ स एव ( व्य० श्लो० ४९ ) । प्रतिपन्न स्त्रिया देय पत्या वा सह यत्कृतम् । स्वयङ्कृतमृणं यद्वा नान्यत्स्त्री दातुमर्हति ॥ अप्रतिपन्नमपि रिक्थग्राहिणी स्त्री दद्यात् । तथा च कात्यायन । भर्तुकामेन या भर्त्रा उक्ता. देयमृण त्वया । अप्रपन्नापि सा दाप्या धन दद्यात्स्थित स्त्रिया ॥ नारद । पुत्रिणी तु समुत्सृज्य पुत्र स्त्री यान्यमाश्रयेत् । तस्या ऋण हरेत्सर्वं नि स्वाया पुत्र एव तु ॥ इद तु रिक्थग्राहपुत्रपरम् ॥ नारद । पितृव्येणाविभक्तेन भ्रात्रा वा यदृण कृतम् । मात्रा वा यत्कुटुम्बार्थे दद्युस्तत्सर्वरिक्थिन ॥ उत्तमर्णतत्पुत्राद्यभावे ऋणदाने प्रकारमाह नारद । ब्राह्मणस्य तु यद्देय सान्वयश्च न चास्ति स । निर्वपेत्तत्सकुल्येषु तदभावेऽस्य बन्धुषु ॥ यदा तु न सकुल्या स्युर्न च सम्बन्धिबान्धवा । तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत् ॥ प्रजापतिरपि ॥ बन्ध्वभावेऽपि विप्रेभ्यो देय क्षेप्य जलेऽपि वा ॥ जले क्षिप्त तयाप्तौ च धन स्यात्पारलौकिकम् ॥ यदा तु जलादौ क्षिप्ते धन्यायाति तदासौ प्राप्नोत्येव ॥

देयम् ।

॥ इति ऋणादानप्रकरणम् ॥

---

(१) वी० प० १०६ पृ० २
(२) वी० प० १०८ पृ० २
(३) वी० प० १०७ पृ० २ व्य० मा०, क० वि०
(४) वी० प० १०८ पृ० १ क० वि० व्य० मा०
(५) वी० प० १०९ पृ० १; व्य० मा०
(६) वी० प० १०९ पृ० १
(७) वी० प० १०९ पृ० २
(८) 'पत्नी (ग) (घ)
(९) वी० प० १०९ पृ० २ धनं यथार्थितं स्त्रिया' इत्यन्तिमचरणो वीरमित्रोदये
(१०) वी० प० १०९ पृ० २
(११) वी० प० ११० पृ० १
(१२) वी० प० ११० पृ० १; क० वि०; व्य० मा० ८

## ॥ अथ निक्षेपः ॥

निक्षेपः ।

**नारदः** । स्वद्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥ असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते । तं जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥ **बृहस्पतिः** । *ददतो यद्धरेत्पुण्यं हेमकुप्याम्बरादिकम् । तस्या पालयतो न्यासं तथैव शरणागतम् ॥* स्थापितं येन विधिना येन यच्च यथाविधम् ॥ तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे ॥ न्यासो निक्षेपः । प्रत्यनन्तरः स्थापयितुः संनिहितः ॥ **मनुः** (अ० ८ श्लो० १९१)। यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते । तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥ **बृहस्पतिः** । भेदेनोपेक्षया न्यासं गृहीता यदि नाशयेत् । याच्यमानो न दद्याद्वा दाप्यः स सोदयं भवेत् ॥ भेदः स्वद्रव्यतारतम्यम् । तेन स्वद्रव्येण सहोपेक्षया नाशे न दोषः ॥ **याज्ञवल्क्यः** (व्य० श्लो० ६७)। आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ॥ आजीवः भोगवृद्ध्यर्थप्रयोगादिनोपजीवन् । उदयो वृद्धिः ॥ तस्या विशेषमाह **कात्यायनः** । निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च । याच्यमानं न चेद्दद्याद्वर्धते पञ्चकं शतमिति ॥ **मनुः** (अ० ८ श्लो० १९२) । निक्षेपस्यापहर्तारं तत्समं दापयेद्दमम् ॥ तथोपनिधिहर्तारं विशेषेणैव पार्थिवः ॥ **बृहस्पतिः** । *दैवराजोपघातेन यदि तन्नाशमाप्नुयात् । गृहीतृद्रव्यसहितं तत्र दोषो न विद्यते ॥* **याज्ञवल्क्यः** (व्य० श्लो० ६६) । न दाप्योऽपहृतं तं तु राजदैविकतस्करैः ॥ **मनुः** (अ० ८ श्लो० १८९) । स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे । न स राज्ञाभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥ प्रत्यनन्तरः संनिहितः । प्रमाणविमर्शकविषये नाभियोज्य इत्यर्थः ॥ सर्वमप्यमुं निक्षेपन्यायमन्यत्राप्यतिदिशति **बृहस्पतिः** । अन्वाहिते याचितके शिल्पिन्यासे सबन्धके । एष एवोदितो धर्मस्तथा च शरणागते ॥ अन्वाहितममुकेन मयि स्थापितं च त्वया तस्मै देयमिति पुरुषान्तरहस्तेऽर्पितम् । याचितमुद्वाहादौ शोभार्थं नीतमलङ्कारादि । शिल्पिन्यासो हेमकारादिषु कुण्डलाद्यर्थं निक्षिप्तम् ॥ **नारदोऽपि** । एष एव विधिर्दृष्टो याचितान्वाहितादिषु । शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥ प्रतिन्यासः स्वामिना यत्र निक्षिप्तं तेनाप्यन्यत्र निक्षिप्तम् ॥ राजदैवादिनष्टस्यापि शिल्पिनस्तस्य क्वचित्प्रतिदानमाह **कात्यायनः** । यश्च संक्रियते न्यासो दिवसैः परिनिष्ठितैः । तदूर्ध्वं स्थापयेच्छिल्पी दाप्यो दैवाहृतेऽर्पितम् ॥ **नारदः** । मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः । द्विःपादस्त्रिस्तृतीयांशश्चतुर्धौतेऽर्धमेव च ॥

---

(१) मि० व्य० पृ० ४६ पृ० १ वी० प० १११ पृ० २ क० वि० व्य० मा०
(२) वी० प० १११ पृ० १, व्य० मा० क० वि०
(३) वी० प० ११३ पृ० १
(४) वी० प० ११२ पृ० २ क० वि० व्य० मा०
(५) मि० व्य० प० ६६ पृ० २ वी० प० ११२ पृ० २ क० वि०
(६) वी० प० ११३ पृ० १ व्य० मा०
(७) वी० प० ११२ पृ० १ व्य० मा० अत्रोत्तरार्धे गृहीतृद्रव्य इत्यत्र ग्रहीतृद्रव्य इति क्वचित्पाठः (च)
(८) वी० प० ११२ पृ० २ क० वि०
(९) वी० प० ११४ पृ० १ व्य० मा०
(१०) मि० व्य० प० ७० पृ० २ वी० प० ११४ पृ० २ व्य० मा०
(११) वी० प० ११४ पृ० १

अर्धक्षयात्तु परत पादांशापचय क्रमात् ॥ याज्ञवल्क्यः (व्य० श्लो० २३८)। वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु पणाशुकम्। विक्रयावक्रयाधानयाचितेषु पणान् दश ॥ अवक्रयो भाटक गृहीतान्यत्रार्पणम। आधानमाधीकरणम्। सुवर्णभिन्नधातवमो ध्मायमाने ह्रासनियममाह स एव (व्य० श्लो० १७८)। अग्नौ सुवर्णमक्षीण
5 रजते द्विपलं शते। अष्टौ त्रपुणि सीसे च ताम्रे पच दशायसि॥ इतोऽधिके रूप्यादे क्षये हेमकारादेर्दण्ड ॥ कचिद्वस्त्राद्यर्थं तन्तुसमर्पणे वृद्धो विशेषमाह स एव (व्य० श्लो० १७९)। शते दशपला वृद्धिरौर्णकार्पासससौत्रिके। मध्ये पञ्चपला वृद्धि सूक्ष्मे तु त्रिपला मता ॥ क्वचित् क्षयमाह स एव (व्य० श्लो० १८०)। कार्मिके रोमबद्धे च त्रिंशद्भागक्षयो मतः। न क्षयो नच वृद्धिश्च कौशेये वल्कलेषु चेति ॥ कार्मिके सिद्ध-
10 पट्टादौ पट्टसूत्रादिना स्वस्तिकाद्याकारनिर्माणे॥ नियतावधिके शिल्पिन्यस्तेऽवधिमध्ये याचितेऽदत्ते नष्टेऽपि च शिल्पिनो दोषाभावमाह स एव। यदि तत्कार्यमुद्दिश्य काल परिनियम्य वा। याचितोऽर्थकृते तस्मिन्नप्राप्ते तु न दाप्यते ॥ एतद्विपर्ययमाह स एव। प्राप्तकाले कृते कार्ये न दद्याद्याचितोऽपि सन्। तस्मिन्नष्टे हृते वापि महीता मूल्यमावहेत् ॥ स एव। यो याचितकमादाय न दद्यात्प्रतियाचित। स निगृह्य बलाद्दाप्यो
15 दण्ड्यश्च न ददाति यः[6] ॥

॥ इति निक्षेपप्रकरणम् ॥

---

## ॥ अथास्वामिविक्रयः ॥

**व्यास.**। याचितान्वाहितन्यास हृत्वा चान्यस्य यद्धनम् ॥ विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रय ॥ **कात्यायन**। अस्वामिविक्रय दानमाधिं वा विनिवर्तयेत ॥
20 अस्वामीति पृथक् पद क्रियाविशेषण च ॥ **नारद**। प्रकाशत क्रयं शुद्ध हेतु स्तेय रह क्रयात् ॥ अस्वाम्यनुमतादासाद्दसतश्च जनाद्रह। हीनमूल्यमवेलायां क्रीणस्तद्दोषभाग्भवेत् ॥ तद्दोष चोरदोष ॥ **याज्ञवल्क्य** (व्य० श्लो० १७१)। आगमेनोपभोगेन नष्ट भाव्यमतोऽन्यथा। पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते[11] ॥ पञ्चबन्धो

---

(१) वी० प० ११५ पृ० १, व्य० मा०
(२) वी० प० ११५ पृ० १
(३) वी० प० ११५ पृ० १, क० नि०
(४) ग (क) (ङ)। मिताक्षरावीरमित्रोदययोरप्यस्मेव
(५) वी० प० ११४ पृ० २ क० नि व्य० मा० एतत्कात्यायनीयमिति वीरमित्रोदयमाधवाभ्या प्रतीयते
(६) वी० प० ११४ पृ० १ क० नि० व्य० मा० तत्रैवेदमपि कात्यायनीयम
(७) वी० प० ११४ पृ० २ नारदं कात्यायनीयमित्युभयत्रस्तम्
(८) वी० प० ११५ पृ० २
(९) प्रकाशतःक्रयत शुद्धि इति मिताक्षरावीरमित्रोदययो"। द्रव्यमस्वामिविक्रीत प्राप्य स्वामी तदाप्नुयात् इत्यस्य पूर्वार्धं मिताक्षरावीरमित्रोदययोर्दृश्यते।
(१०) वी० प० ११५ पृ० २, क० वि० मि० व्य० प० ६९ पृ० १
(११) वी० प ११६ पृ० १; क० वि०; व्य० मा०; अत्र प्रकाशात 'तेनाविभाविते' इत्यत्र 'तदनभिभाविते' इति पाठ (घ) (ङ) (ड)

नष्टद्रव्यपञ्चमांश ॥ नाष्टिकोऽपि यस्तत्साक्षिणा विरुद्धोक्तौ नष्टद्रव्याद्द्विगुणं दण्डमाह व्यास । वादी चेन्मागतं द्रव्यं साक्षिभिर्न विभावयेत् । दाप्यः स्याद्द्विगुणं दण्डं क्रेता तद्द्रव्यमर्हति ॥ क्रेतुः कृत्यमाह स एव । मूले समाहृते क्रेता नाभियोज्यः कथंचन । मूलेन सह वादस्तु नाष्टिकस्य विधीयते ॥ बृहस्पतिः । विक्रेता दर्शितो यत्र हीयते व्यवहारतः । क्रेत्रे राज्ञे मूल्यदण्डौ प्रदद्यात्स्वामिने धनम् ॥ कात्यायनः । मूला 5
नयनकालश्च तत्र देयोऽध्वसङ्ख्यया ॥ असमाहार्यमूलस्तु क्रयमेव विशोधयेत् । विशोधिते क्रये राज्ञा वक्तव्यः स न किंचन ॥ अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकम् । पश्चादागमविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिः ॥ क्रेत्रा क्रये साधितेऽपि द्रव्यं नाष्टिक एव लभते ॥ तथाच मनुः (अ० ८ श्लो० २०२) । अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् । अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥ अनाहार्यं प्रदर्श्य 10
प्रकाशेन क्रयेण शोधितं द्रव्यमित्यर्थः ॥ कात्यायनः । अनुपस्थापयन्मूलं क्रयं वाप्य विशोधयन् । यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥ बृहस्पतिः । वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः । अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥ स्वामी दत्त्वार्धमूल्यं तु प्रगृह्णीत स्वकं धनम् । अर्धं द्वयोरपि हृतं तत्र स्याद्व्यवहारतः ॥ मरीचिः । अविज्ञातनिवेशत्वादत्र मूलं न लभ्यते । हानिस्तत्र समा कल्प्या क्रेतृना 15
ष्टिकयोर्द्वयोः ॥ निवेशो विक्रेतृस्थलम् ॥ नारदः । उद्दिष्टमेव भोक्तव्यं स्त्री पशुर्वसुधापि वा । अनर्पितं तु यो भुङ्क्ते भुक्तभोगं प्रदापयेत् ॥ उद्दिष्टमनुज्ञातम् भुक्तभोगम् भोगानुरूपकं भाटकम् ॥ याज्ञवल्क्यः (व्य० श्लो० १७३) । शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् । अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥ यत्तु मनुः (अ० ८ श्लो० ३०) प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् । अर्वाक् त्र्यब्दाद्ध 20
रेत्स्वामी परतो नृपतिर्हरेत् तच्छ्रोत्रियस्वामिकद्रव्यविषयम् ॥ स एव (अ० ८ श्लो० ३३) । आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः । दशमं द्वादशं वापि सतां धर्ममनुस्मरन्निति ॥ तत्र प्रथमे वर्षे सर्वं दद्यात् । द्वितीये वर्षे द्वादशभागं गृहीत्वा दद्यात् । तृतीये वर्षे दशमम् । चतुर्थादौ षष्ठमिति ।

तत्र राज्ञो भाग ।

(१) वी० प० ११६ पृ० २ क० वि
(२) वी० प० ११७ पृ० १ व्य० मा० एतद्बृहस्पतिवचनमिति मिताक्षरायाम् (व्य० प० ६९ पृ० २) उभयचरणादौ मूल इत्यत्र मूल्य इति वीरमित्रोदये
(३) वी० प० ११७ पृ० १ क० वि० व्य० मा
(४) देयोऽध्विनसङ्ख्यया इति माधववीरमित्रोदयया वी० प० ११७ पृ० १ इदं गौतमीयमित्यध्यस्तं मिताक्षरायाम् (व्य० प० ६९ पृ० २) बार्हस्पत्यमिति कमलाकरे
(५) मि० व्य० प० ६९ पृ० २ वी० प० ११७ पृ० १ व्य० मा० क० वि० इदं असमाहार्य इत्यादि वचनद्वयं नारदमनू इत्यवकम्प्य वीरमित्रोदये उपन्यस्तम् । प्रथमवचनं तु मिताक्षरायां मानवमिति कमलाकरे च बार्हस्पत्यमित्युपन्यस्तम्
(६) वी० प० ११७ पृ० २ क० वि० व्य० मा० वचनादौ अथ मूलमनाहार्यं प्रकाशक्रयशोधितं इति कल्कभट्टसम्मतः पाठः अथ मूलमनाहार्यम् इति माधववीरमित्रोदययोः
(७) [illegible]
(८) वी० प० ११७ पृ० २ व्य० मा० एते कात्यायनवचने इति माधववीरमित्रोदययोः
(९) वी० प० ११८ पृ० १ क० वि० व्य० मा०
(१०) वी० प० ११८ पृ० १
(११) वी० प० ११८ पृ० १ मि० व्य० प० ७२ पृ० १ क० वि०
(१२) मि० व्य० प० ७२ पृ० १

अर्धक्षयात्तु परतः पादांशापचयः क्रमात् ॥ याज्ञवल्क्यः ( व्य० श्लो० २३८ ) ।
वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु पणाशुकम् । विक्रयावक्रयाधानयाचितेषु पणान्
दश ॥ अवक्रयो भाटकं गृहीत्वान्यत्रार्पणम् । आधानमाधीकरणम् । सुवर्णभिन्नधा-
तावग्नौ ध्मायमाने ह्रासनियममाह स एव (व्य० श्लो० १७८) । अग्नौ सुवर्णमक्षीणं
5 रजते द्विपलं शते । अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि ॥ इतोऽधिके रूप्यादे-
क्षये हेमकारादेर्दण्डः ॥ कंचिद्वस्त्राद्यर्थं तन्तुसमर्पणे वृद्धौ विशेषमाह स एव ( व्य०
श्लो० १७९) । शते दशपला वृद्धिरौर्णकार्पाससौत्रिके । मध्ये पञ्चपला वृद्धिः सूक्ष्मे
तु त्रिपला मता ॥ क्वचित् क्षयमाह स एव (व्य० श्लो० १८०) । कार्मिके रोमबद्धे च
त्रिंशद्भागक्षयो मतः । न क्षयो नच वृद्धिश्च कौशेये वल्कलेषु चेति ॥ कार्मिके सिद्ध-
10 पट्टादौ पट्टसूत्रादिना स्वस्तिकाद्याकारनिर्माणे ॥ नियतावधिके शिल्पिन्यस्तेऽवधिमध्ये
याचितेऽदत्ते नष्टेऽपि च शिल्पिनो दोषाभावमाह स एव । यदि तत्कार्यमुद्दिश्य कालं
परिनियम्य वा । याचितोऽर्धकृते तस्मिन्नप्राप्ते तु न दाप्यते ॥ एतद्विपर्ययमाह स एव ।
प्राप्तकाले कृते कार्ये न दद्याद्याचितोऽपि सन् । तस्मिन्नष्टे हृते वापि ग्रहीता मूल्य-
मावहेत् ॥ स एव । यो याचितकमादाय न दद्यात्प्रतियाचितः । स निगृह्य बलाद्दाप्यो
15 दण्ड्यश्च न ददाति यः[६] ॥

॥ इति निक्षेपप्रकरणम् ॥

---

## ॥ अथास्वामिविक्रयः ॥

**व्यासः** । याचितान्वाहितन्यासं हृत्वा चान्यस्य यद्धनम् ॥ विक्रीयते स्व
स ज्ञेयोऽस्वामिविक्रयः ॥ **कात्यायनः** । अस्वामिविक्रयं दानमाधिं वा विनिवर्तयेत् ॥
20 अस्वामीति पृथक् पदं क्रियाविशेषणं च ॥ **नारदः** । प्रकाशतः क्रयः शुद्धः मैतु स्तेयं
रहः क्रयात् ॥ अस्वाम्यनुमताद्दासाद्वसतश्च जनाद्रहः । हीनमूल्यमवेलायां क्रीणंस्तद्दो-
षभाग्भवेत् ॥ तद्दोषः चौरदोषः ॥ **याज्ञवल्क्यः** ( व्य० श्लो० १७१ ) । आगमेनो-
पभोगेन नष्टं भाव्यमतोऽन्यथा । पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते[११] ॥ पञ्चबन्धो

---

(१) वी० प० ११५ पृ० १, व्य० मा०

(२) वी० प० ११५ पृ० १

(३) वी० प० ११५ पृ० १, क० वि०

(४) ग (क) (उ) । मिताक्षरावीरमित्रोदय-
पाठस्समेव

(५) वी० प० ११४ पृ० २ क० वि० व्य० मा०
एतत्कात्यायनीयमिति वीरमित्रोदय
माधवाभ्यां पठितम्

(६) वी० प० ११४ पृ० १ क० वि० व्य०
मा० नचैतेदमपि कात्यायनीयम

(७) वी० प० ११४ पृ० २ नचेदं कात्यायनी

(८) वी० प० ११५ पृ० १

(९) प्रकाशक्रयतः शुद्धिः इति मितभट्टार्थ रत्न
माधवयोः । द्रव्यमस्वामिविक्रीतं प्राप्य
स्वामी तदाप्नुयात् इत्यस्य पूर्वार्धा मिता
क्षरावीरमित्रोदययोर्दृश्यते ।

(१०) वी० प० ११५ पृ २, क० वि०, मि० व्य०
प० ६९ पृ० १

(११) वी० प ११५ पृ० २ क० वि०, व्य०
मा० ; अत्र श्लोकान्ते 'तेनाविभाविते'
इत्यत्र 'तेनाभिभाविते' इति पाठः (ग)
(ड) (उ)

नष्टद्रव्यपञ्चमाश ॥ नाष्टिकोपन्यस्तसाक्षिणा विरुद्धोक्तौ नष्टद्रव्याद्द्विगुण दण्डमाह व्यास । वादी चेन्मार्गित द्रव्य साक्षिभिर्न विभावयेत । दाप्य स्याद्द्विगुण दण्ड क्रेता तद्द्रव्यमर्हति[1] ॥ क्रेतु कृत्यमाह स एव । मूले समाहृते क्रेता नाभियोज्य कथचन । मूलेन सह वादस्तु नाष्टिकस्य विधीयते[2] ॥ बृहस्पति । विक्रेता दर्शितो यत्र हीयते व्यवहारत । क्रेत्रे राज्ञे मूल्यदण्डौ प्रदद्यात्स्वामिने धनम्[3] ॥ कात्यायन । मूलानयनकालश्च तत्र देयोऽध्वसङ्ख्यया[4] ॥ असमाहार्यमूलस्तु क्रयमेव विशोधयेत् । विशोधिते क्रये राज्ञा वक्तव्य स न किंचन ॥ अभियोक्ता धन कुर्यात्प्रथम ज्ञातिभि स्वकम् । पश्चादात्मविशुद्ध्यर्थं क्रय क्रेता स्वबन्धुभि[5] ॥ क्रेत्रा क्रये साधितेऽपि द्रव्य नाष्टिक एव लभते ॥ तथाच मनु (अ० ८ श्लो० २०२) । अथ मूलमनाहार्यप्रकाशक्रयशोधितम । अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम ॥ अनाहार्यप्रदर्श्य प्रकाशेन क्रयेण शोधित द्रव्यमित्यर्थ[6] ॥ कात्यायन । अनुपस्थाप्य मूल क्रय वाच्य विशोधयन । यथाभियोग धनिने धन दाप्यो दम च स[7] ॥ बृहस्पति । वणिग्वीथीपरिगत विज्ञात राजपूरुषै । अविज्ञाताश्रयात्क्रीत विक्रेता यत्र वा मृत ॥ स्वामी दत्त्वार्धमूल्य तु प्रगृह्णीत स्वक धनम । अर्धं द्वयोरपि हृत तत्र स्याद्व्यवहारत ॥ मरीचि । अविज्ञातनिवेशत्वाद्यत्र मूल न लभ्यते । हानिस्तत्र समा कल्प्या क्रेतृनाष्टिकयोर्द्वयो[8] ॥ निवेशो विक्रेतृस्थलम ॥ नारद । उद्दिष्टमेव भोक्तव्य स्त्री पशुर्वसुधापि वा । अनर्पित तु यो भुङ्क्ते भुक्तभोग प्रदापयेत् ॥ उद्दिष्टमनुज्ञातम भुक्तभोगम भोगानुरूपक भाटकम् ॥ याज्ञवल्क्य (व्य० श्लो० १७३) । शौल्किके स्थानपालैर्वा नष्टापहृतमाहृतम् । अर्वाक्सवत्सरात्स्वामी हरेत परतो नृप ॥ यत्तु मनु (अ० ८ श्लो० ३०) प्रनष्टस्वामिको द्रव्य राजा त्र्यब्द निधापयेत । अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् तच्छ्रोत्रियस्वामिकद्रव्यविषयम ॥ स एव (अ० ८ श्लो० ३३) । आददीताथ षड्भाग प्रनष्टाधिगतान्नृप । दशम द्वादश वापि सता धर्ममनुस्मरान्निति[9] ॥ तत्र प्रथमे वर्षे सर्वं दद्यात । द्वितीये वर्षे द्वादश भाग गृहीत्वा दद्यात् । तृतीये वर्षे दशमम । चतुर्थादौ षष्ठमिति ।

तत्र राज्ञा भाग ।

(१) वी० प० ११६ पृ० २ क० वि

(२) वी० प० ११७ पृ० १ व्य० मा एतद्बृहस्पतिवचनमिति मिताक्षरायाम् ( व्य० प० ६९ पृ० २ ) उभयचरणादौ मूले इत्यत्र मूल्ये इति वीरमित्रोदये

(३) वी० प० ११७ पृ० १ क० वि० व्य० मा

(४) देयो योजनसङ्ख्यया इति माधववीरमित्रोदययो वी० प० ११७ पृ० १ इद गौतमीयमित्युपन्यस्त मिताक्षरायाम् (व्य० प० ६९ पृ० २) बार्हस्पत्यमिति कमलाकरे

(५) मि० व्य० प० ६९ पृ० २ वी० प० ११७ पृ० १ व्य० मा० क० वि० इद असमाहार्य इत्यादि वचनद्वयं नारदमनू इत्युपक्रम्य वीरमित्रोदय उपन्यस्तम् । प्रथमवचनं तु मिताक्षरायां मानवमिति कमलाकरे च बार्हस्पत्यमित्युपन्यस्तम

(६) वी० प० ११७ पृ० २ क० वि व्य० मा० वचनादौ अथ मूलमनाहार्यप्रकाशक्रयशोधित इति कुल्लूकभट्टसम्मत पाठ अथ मूलमनाहार्यम् इति माधववीरमित्रोदययो

(७) वी० प० ११७ पृ० २ क० वि०

(८) वी० प० ११७ पृ० २ व्य० मा० एतेकात्यायनवचन इति माधववीरमित्रोदययो

(९) वी० प० ११८ पृ० १ क० वि०, व्य० मा०

(१०) वी० प० ११८ पृ० १

(११) वी० प० ११८ पृ० १ मि० व्य० प० ७२ पृ० १ क० वि०

(१२) मि० व्य० प० ७० पृ० १

हर्त्त परतो नृप इत्येन स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञामात्रपरम् आगते तु स्वामिनि व्ययीकृतमपि देयमिति मिताक्षरायाम् (व्य० प० १६ पृ० २)॥ इदं तु स्वामिनोऽज्ञाने। यदा त्वमुक इदं द्रव्यं विस्मृत्य गत इत्यवधारणं तदा त्रिवर्षादूर्ध्वमपि लभते। राज्ञोऽपि न व्ययाद्यधिकारः। भागं तु किञ्चिद्गृह्णीयादेव॥

5 परस्वामिकनष्टलब्धपशूनामेकदिनरक्षणे भृतिमाह याज्ञवल्क्यः (व्य०श्लो० १७४)। पणानेकशफे दद्याच्चतुरः पञ्च मानुषे। महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके॥ भक्षितं तु देयमेव॥

परस्वामिकनष्टलब्धपशूनां भृतिः।

निधिप्राप्तौ याज्ञवल्क्यः (व्य० श्लो० ३४।३५)। राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः। विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः॥ इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्। अनिवेदितविज्ञातो[1] दाप्यस्तं दण्डमेव चेति॥ यदा तु कश्चिच्चिह्नमानादिना स्वकीयं निधिं भावयति तदाधिगन्त्रे द्वादशं भागं दत्त्वा स्वयं षष्ठं गृहीत्वा तस्मै दद्यात्। यदाह मनुः (अ० ८ श्लो० ३५) ममायमिति यो ब्रूयान्निधिं सत्येन मानवः। तस्याददीत षड्भागं राजा द्वादशमेव चेति॥ द्वादशस्त्वधिगन्त्रे चोरहृतं प्रत्याह स एव (अ० ८ श्लो० ४०)। दातव्यं सर्ववर्णेभ्यो राज्ञा चोरैर्हृतं धनम्। राजा तदुपभुञ्जानश्चौरस्याप्नोति किल्बिषम्॥ यदा त्वाहरणेऽशक्तस्तदाह कृष्णद्वैपायनः॥ प्रत्याहर्तुमशक्तस्तु धनं चोरैर्हृतं यदि। स्वकोशात्तद्धि देयं स्यादशक्तेन महीभृतेति[2]॥

निधिप्राप्तौ।

10

15

॥ इत्यस्वामिविक्रयनिरूपणम् ॥

---

## ॥ अथ सम्भूयसमुत्थानम् ॥

20 नारदः। वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते। तत्सम्भूयसमुत्थानं व्यवहारपदं स्मृतम्॥ बृहस्पतिः॥ बहूनां सम्मतो यस्तु दद्यादेको धनं नरः। करणं कारयेद्वापि सर्वैरेव कृतं भवेत्॥ परीक्षकाः साक्षिणस्तु त एवोक्ताः परस्परम्। सन्दिग्धेऽर्थे वञ्चनायां न चेद्विद्वेषसंयुता॥ यः कश्चित्कारकस्तेषां विज्ञानं प्रतिनिश्चये। शपथैः सोऽपि शोध्यः स्यात्सर्ववादेष्वयं विधिः॥ याज्ञवल्क्यः (व्य० श्लो० २६५।२६०)। जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्॥ प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम्। स तद्दद्याद्विप्लवाच्च रक्षिता दशमांशभाक्॥ कात्यायनः। शिल्पकाभिज्ञकुशला भा-

बहूनामैकेन व्यवहारे कृते।

25

---

(१) गतश्री (क) (ख) (ग) (घ)
(२) ना [illegible] मिताक्षरा (व्य०प०१०पृ०
१) इ [illegible] पा० [illegible]
[illegible]

(३) [illegible] प० १० पृ० १
(४) [illegible]
(५) [illegible]
(६) [illegible]

चार्याश्चेति शिल्पिन । एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥ शिष्यका शिष्या । अभिज्ञा ज्ञानवन्त । कुशला दक्षा । आचार्या नूतनमार्गप्रवर्तका ॥ बृहस्पति । हर्म्यं देवगृह वापि धार्मिकोपस्कराणि च । सम्भूय कुर्वता तेषा प्रमुखो ह्यशमर्हति ॥ स एव । नर्तकानामेष एव धर्म सद्भिरुदाहृतः । तालज्ञो लभते त्वर्धं गायनास्तु समाशिनः ॥ कात्यायन ॥ तेषा चैत्प्रसृताना च ग्रहण समवाप्नुयात् । तन्मोक्षणार्थं यद्दत्त वहेयुस्ते यथाशत ॥ वणिजा कर्षकाणा च चोराणा शिल्पिना तथा । अनियम्यास्वकर्तृणा सर्वेषामेष निर्णयः ॥

ऐकैकैकै भाग ॥

॥ इति सम्भूयसमुत्थानम ॥

---

## ॥ अथ दत्ताप्रदानिकम् ॥

नारद । दत्त्वा द्रव्यमसम्यग्य पुनरादातुमिच्छति । दत्ताप्रदानिक नाम व्यवहारपद हि तत् ॥ असम्यगिति क्रियाविशेषणम् निषिद्धमित्यर्थ ॥ स एव । अथ देयमदेय च दत्त चादत्तमेव च । व्यवहारे स विज्ञेयो दानमार्गश्चतुर्विध ॥ अन्वाहित याचितकमाधि साधारण च यत् । निक्षेप पुत्रदाराश्च सर्वस्व चान्वये सति ॥ अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥ अत्र पुत्रदारादिषु स्वत्वाभावात्तद्विषये नान्तरिक्षे न दिवीतिवन्निषेधानुवादमात्रम् ॥ एतेन स्वकुटुम्बाविरोधेन देय दारसुतादृते इति याज्ञवल्कीय (व्य० श्लो० १७५) पर्युदासोऽपि व्याख्यात ॥ पुत्रदारेषु स्वत्वाभाव पूर्वमुपपादित स्वत्वविवादे ॥ एतद्दाने न केवल व्यवहारासिद्धि किंतु प्रायश्चित्तमपीत्याहैतानि प्रकृत्य दक्ष ॥ यो ददाति स मूढात्मा प्रायश्चित्तीयते नर ॥ मनु । अदेय यश्च गृह्णाति यश्चादेय प्रयच्छति । तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसमिति ॥ देयमाह बृहस्पति । कुटुम्बभक्तवसनाद्देय यदतिरिच्यते ॥ अवश्यदेयमाह कात्यायन । स्वेच्छया य प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् । न दद्यादृणवद्दाप्य प्राप्नुयात्पूर्वसाहसम् ॥ गौतम । प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति ॥ वृत्तेर्दानक्रयौ प्रतिषेधति व्यास । ये जाता येऽप्यजाताश्च ये च गर्भेष्ववस्थिता । वृत्तिं च तेऽभिकाङ्क्षन्ति न दान न च विक्रय इति ॥ दत्तादत्तभेदानाह नारद । दत्त सप्तविध प्रोक्त-

दत्ताप्रदानिकम् ।

अदेयम् ।

देयम् ।

दत्तम् ।

अदत्तम् ।

(१) वी० प० १२० पृ० २ क० वि० व्य० मा०
(२) वी० प० १२० पृ० २ क० वि०
(३) क० वि० वी० प० १२० पृ० २
(४) वी० प० १२१ पृ० १ क० वि०
(५) मि० व्य० प० ७७ पृ० २ वी० प० १२१ पृ० १ क० वि०
(६) तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयाध्याये सप्तमानुवाके
(७) व्य० मा०
(८) वी० प० १२१ पृ० २
(९) वी० प० १२१ पृ० २ क० वि० व्य० मा० बहुमनुपुस्तकेष्वनुपलब्धमपीद मनुवचनमेवति वीरमित्रोदयादितो निश्चीयते
(१०) वी० प० १२१ पृ० २ क० वि० व्य० मा०
(११) वि० प० १२२ पृ० २ क० वि०
(१२) क० वि०
(१३) वी० प० १२२ पृ० १ क० वि० व्य

मदत्तं षोडशात्मकम् । पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ॥ स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥ अनुग्रहो धर्मं ॥ अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः । तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥ बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम् । कर्त्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥ अपात्रे पात्रमित्युक्ते कार्ये वाऽधर्मसंज्ञिते ।
5 यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥ रुग्रुपतापः । भयादिकृतोपतापान्वितैरित्यन्वयः । ताडनादिभयाद्युपतप्तेन दत्तमित्यर्थः । एवं भ्रान्त्यादिक्रोधाद्ययोऽभवन्निति बुद्ध्या दत्तम् । व्यत्यासो रूप्यं दातुं प्रवृत्तेन भ्रमात्सुवर्णं दत्तम् । छलयोगतः देवदत्ताय राज्ञा गौर्देयेति ज्ञात्वा गृहीतदेवदत्तवेषायान्यस्मै पात्रभूतायापि दत्ता । आर्त्तो रोगेणास्थिरचित्तः । मत्तो मदनीयद्रव्येण । उन्मत्तो वातादिना । अपवर्जितं दत्तम् । मामकमयं कर्म करिष्य-
10 तीति कर्माकुर्वाणाय दत्तम् । अधर्मविनियोक्त्रे धर्मं करिष्यतीति बुद्ध्या दत्तम् । एतानि परावर्तन्ते ॥ कात्यायनः । कामक्रोधास्वतन्त्रार्त्तक्लीबोन्मत्तप्रमोहितैः । व्यत्यासपरिहासाय यद्दत्तं तत्पुनर्हरेत् ॥ कामात्परस्त्रीवञ्चनार्थम् । क्लीबो भीतः । व्यत्यासपरिहाराय दत्तमुत्कोच इत्यर्थः ॥ यत्तु कार्यस्य सिद्ध्यर्थमुत्कोचः स्यात्प्रतिश्रुतः । तस्मिन्नपि प्रसिद्धेऽर्थे न देयः स्यात्कथञ्चन ॥ अथ प्रागेव दत्तश्चेत्प्रतिदाप्यस्ततो बलात् । दण्डं चैकादश
15 गुणमाहुर्गार्गीयमानवाः ॥ उत्कोचस्वरूपमाह स एव । स्तेयसाहसिकोद्वृत्तपारदारिकशासनात् । दर्शनाद्भ्रष्टवृत्तस्य तथाऽसत्यप्रवर्तनात् ॥ प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते ॥ मनुः (अ० ८ श्लो० १६५) ।

उत्कोचस्वरूपम् ।

योगाधमनविक्रीतं योगदानप्रतिग्रहम् । यस्य चाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेदिति ॥ योगः उपधिः । यस्य चाप्यन्यस्यापि कार्यस्य । तत्सर्वमुपध्यपगमे परावर्तेत इत्यर्थः ॥
20 कात्यायनः । स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात् । अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥ अत्र विस्तरो गुरुकृते द्वैतनिर्णये द्रष्टव्यः ॥

॥ इति दत्ताप्रदानिकम् ॥

---

## ॥ अथाभ्युपेत्याशुश्रूषा ॥

नारदः । अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद्विवाद-
25 पदमुच्यते ॥ तत्र शुश्रूषकत्रैविध्यमाह बृहस्पतिः । आयुधीयस्तूत्तमः प्रोक्तो मध्यमस्तु कृषीवलः । भारवाहोऽधमः प्रोक्तस्तथा च गृहकर्मकृत् ॥ नारदः । सर्वस्वाधिकृतो यः स्यात्कुटुम्बस्य

अभ्युपेत्याशुश्रूषा । भृत्य ।

---

(१) मि० व्य० प० ७१ प० १ वी० प० १७२ पृ० १ क० नि० व्य० मा०
(२) मि० व्य० प० ७१ पृ० १ वी० प० १ १ पृ० १ क० नि० व्य० मा०
(३) वी० प० १२१ पृ० २ क० नि० व्य० मा०
(४) वी० प० १२१ पृ० २, व्य० मा०
(५) मि० व्य० प० ७१ पृ० २ वी० प० १ १ पृ० क० नि० व्य० मा०
(६) मि० व्य० प० ७२ पृ० २, वी० प० १२५ पृ० १ क० नि० व्य० मा० इयत्र त्रिविधो भृत इत्यादियथाऽर्थात् [illegible] इत्याधिकृत

तथोपरि । सोऽधिकर्मकृतो ज्ञेयः स च कौटुम्बिकः स्मृतः ॥ कात्यायनः । स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः । त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ॥

दास । वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः । राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम् ॥ नारदः । वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ॥ कात्यायनः । प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः । 5

दास के योग्यता । निर्वासं कारयेद्विप्रं दासत्वं क्षत्रियं भृगुः ॥ क्षत्रग्रहणं विट्शूद्रयोरुपलक्षणम् । विप्रनिर्वासनप्रकारमाहतुर्दक्षनारदौ । परिव्रज्यां गृहीत्वा तु यः स्वधर्मे न तिष्ठति । श्वपदेनाङ्कयित्वा तु राजा शीघ्रं प्रवासयेत् ॥ कात्यायनः । सवर्णेऽपि तु विप्रे तु दासत्वं नैव कारयेत् ॥ शीलाध्ययनसम्पन्ने तदून

तत्कर्म । कर्म कामतः । तत्रापि नाशुभं किंचित्प्रकुर्वीत द्विजोत्तमे ॥ 10 मनुः (अ० ८ श्लो० ४११) । क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ । बिभृयादानृशंस्येन स्वानिकर्म तु कारयेत् ॥ स्वानिकर्म उत्तमं तद्योग्यमित्यर्थः ॥ कात्यायनः । आदद्याद्ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च । राजा तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥ कामात्तु संश्रितां यस्तु कुर्याद्दासीं कुलस्त्रियम् । स तामयेत वान्यत्र दण्ड्यस्त्वथाकृतं भवेत् ॥ बालधात्रीमधात्री च दासी 15 मिव भुनक्ति यः । परिचारकपत्नीं च प्राप्नुयात्पूर्वसाहसम् ॥ विष्णुः । यस्तूत्तमं वर्णं दास्येऽभियोजयति तस्योत्तमसाहसो दण्डः ॥ कात्यायनः ॥ विक्रोशमाना यो भक्तां दासीं विक्रेतुमिच्छति । अनापदिस्थः शक्तः सन् प्राप्नुयात्पूर्वसाहसम् ॥ दासभे

दासभेदाः । दानाह नारदः । गृहजातस्तथा क्रीतो लब्धो दायादुपागतः । अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥ मोक्षितो महतश्च 20 र्णाद्युद्धे प्राप्तः पणे जितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥ भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥ तत्र पूर्वश्चतुर्वर्गो

दासमोक्षः । दासत्वान्न विमुच्यते । प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥ विक्रीणीते स्वतन्त्रः सन् य आत्मानं नराधमः । स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥ यो वैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् । दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥ याज्ञवल्क्यः (व्य० श्लो० १८३)। 25 प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ॥ नारदः । अनाकालभृतो दास्यान्मुच्यते

(१) वी० प० १२५ पृ० १ क०नि०
(२) वी० प० १२५ पृ० १ व्य० मा०
(३) वी० प० १२५ प० २ मि० व्य० प० ७२ पृ० २
(४) वी० प० १२५ प० २ क०नि० व्य० मा० वचनान्त 'इत्यर्थः' इति वीर मित्रोदय । इत्यत्र पुस्तकम्
(५) शूद्रयोरलक्षण तु न सम्यक् तस्य प्रव्रज्याप्रसम्भवात्
(६) वी० प० १२५ पृ० २, व्य० मा०
(७) वी० प० १२६ पृ० १
(८) वी० प० १२६ पृ० १ व्य० मा० स्वान कर्मणि कारयन् इति कुल्लूकभट्टसम्मत पाठः । स्वार्थं कर्मणि कारयन् इति तु वीरमित्रोदये
(९) वी० प० १२७ पृ० २ क०नि०
(१०) वी० प० १२७ पृ० २
(११) मि० व्य० प० ७३ पृ० २ वी० प० १२६ प० १ क०नि०
(१२) वी० प० १०६ पृ० ०, क०नि० व्य० मा०

गोयुग ददत। आहितोऽपि धन दत्त्वा स्वामी यद्येनमुद्धरेत् ॥ ऋण तु सोदय दत्त्वा ऋणी दास्यात्प्रमुच्यते। तवाहमित्युपगतो युद्धे प्राप्त पणे जित ॥ प्रतिशीर्षप्रदानेन मुच्येरन्नल्पकर्मणा। कृतकालव्यपगमात्कृतो दासो विमुच्यते ॥ भक्तस्योपेक्षणात्सद्यो भक्तदास प्रमुच्यते। निग्रहाद्वडवायास्तु मुच्यते वडवाभृत इति ॥ प्रतिशीर्ष प्रतिनि
5 धि। वडवा दासी ॥ याज्ञवल्क्य (व्य० श्लो० १८२)। बलाद्दासीकृतश्चोरैर्विक्रीत श्चापि मुच्यते ॥ नारद। तवाहमिति चात्मान योऽस्वतन्त्र प्रयच्छति। न स त प्राप्नुयात्काम पूर्वस्वामी लभेत तम् ॥ अस्वतन्त्र परदास ॥ अस्मिन्प्रकरणे दासपदगतपुस्त्वस्याविवक्षितत्वाद्दास्यामप्येष सर्वो विधिर्ज्ञेय ॥ तत्र दासीत्वविमोककारणमाह कात्यायन। स्वा दासी यस्तु सगच्छेत्प्रसूता च भवेत्तत। अवेक्ष्य बीज कार्या स्याद
10 दासी सान्वया तु सा ॥ बीजमपत्य गुणवदवेक्ष्येत्यर्थ ॥ नारद। स्व दासमिच्छेद्य कर्तुमदास प्रीतमानस। स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भ सहाम्भसा ॥ साक्षताभि सपुष्पाभिर्मूर्धन्यद्भिरवाकिरेत्। अदास इति चोक्त्वा त्रि प्राङ्मुख तमथोत्सृजेत् ॥ तत प्रभृति वक्तव्य स्वाम्यनुग्रहपालित। भोज्यान्नोऽथ प्रतिग्राह्यो भवत्यभिमत सताम् ॥ कात्यायन। दासेनोढा त्वदासी या

तद्विधि।

15 सापि दासीत्वमाप्नुयात्। यस्माद्भर्ता प्रभुस्तस्या स्वाम्यधीन प्रभुर्यत ॥ दासस्य तु धन यत्स्यात्स्वामी तस्य प्रभुर्मत इति ॥

॥ इत्यभ्युपेत्याशुश्रूषाप्रकरणम् ॥

---

## ॥ अथ वेतनादानम् ॥

नारद। भृताना वेतनस्योक्तो दानादानविधिक्रमः। वेतनस्यानपाकर्म तद्विवादपद
20 स्मृतम् ॥ याज्ञवल्क्य (व्य० श्लो० १९४)। दाप्यस्तु दशम भाग वाणिज्यपशुसस्यत। अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥ एतदल्पायासपरम् ॥ आयासबहुत्वे तु बृहस्पति। त्रिभाग पञ्चभाग वा गृह्णीयात्सीरवाहक। भक्ताच्छादभृत सीराद्भाग गृह्णीत पञ्चमम् ॥ जातसस्यात्त्रिभाग तु प्रगृह्णीयादथाभृत ॥ भक्ताच्छादभृ
25 तोऽन्नवस्त्रदानेन पोषित ॥ नारद। कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्। भृतिं गृहीत्वाऽकुर्वाणो द्विगुणा भृतिमाप्नुयात् ॥ मनु (अ० ८ श्लो० २१५)। भृतोऽनार्तो न य कुर्याद्दर्पात्कर्म यथो-

अनिश्चित्य भृतिकरण।

प्रतिश्रुत्य कर्माकरण।

---

(१) वी० प० १२६ पृ० २ क० रि०
(२) वी० प० १२७ पृ० १ क० रि०
(३) वी० प० १२७ पृ० १ व्य० मा०
(४) मि० व्य० प० ७३ पृ० १, वी० प० १२७ पृ० १ क० रि० व्य० मा०
(५) वी० प० १२७ पृ० २ क० रि०
(६) मि० व्य० प० ७४ पृ० २ वी० प० १२७ पृ० २ क० रि० व्य० मा०
(७) वी० प० १२८ पृ० १ क० रि०
(८) वी० प० १२८ पृ० १ क० रि० व्य० मा०
(९) वी० प० १२८ पृ० [illegible] मि० व्य० प० ७४ पृ० [illegible] क० रि० व्य० मा० [illegible] इति वीरमित्रोदय

दितम् । स दण्ड्य कृष्णलानष्टौ न देय चास्य वेतनम् ॥ स एव ( अ० ८ श्लो० २१७।२१६ ) । यथोक्तमार्त्त स्वस्थो वा यस्तत्कर्म न कारयेत् । न तस्य वेतन देयम ल्पोनस्यापि कर्मण ॥ आर्त्तस्तु कुर्यात्स्वस्थः सन् यथाभाषितमादित.। सुदीर्घस्यापि कालस्य स्व लभेतैव वेतनम् ॥ विष्णु । भृतकश्चापूर्णे काले त्यजन्सकलमेव मूल्य जह्याद्राज्ञे च पणशत दद्यादिति ॥ स एव । स्वामी चेद्भृतकमपूर्णे काले जह्यात्तस्य 5 सर्वमेव मूल्य दद्यात्पणशत च राज्ञे अन्यत्र भृतकदोषात् ॥

स्वामिसेवकयार्विवादे ।

वृद्धमनु । प्रमादान्नाशित दाप्य सम द्विर्द्विहनाशितम् । न तु दाप्यो हृत चौरैर्दग्धमूढ जलेन च ॥ द्रोहो द्वेष । ऊढमपहृतम् । याज्ञवल्क्य (व्य० श्लो० १९७।१९८) । प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणा भृतिम् । प्रक्रान्ते सप्तम भाग चतुर्थं पथि सन्त्यजन् ॥ वृद्धमनु । पथि विक्रीय तद्भाण्ड वणिग्भृत्य 10 त्यजेद्यदि । अथ तस्यापि देय स्याद्भृतेरर्धं लभेत स ॥ कात्यायन । यथा च पथि तद्भाण्डमासिध्येत ह्रियेत वा । यावानध्वा गतस्तेन प्राप्नुयात्तावतीं भृतिम् ॥ त्यजे त्पथ्यसहाय य श्रान्त रोगार्त्तमेव वा । प्राप्नुयात्साहस पूर्वं ग्रामे त्र्यहमपालयन् ॥ आसिध्येत राजाज्ञयाऽवरुध्येत ॥ बृहस्पति । प्रभुणा विनियुक्त सन् भृतको विदधाति य । तदर्थमशुभ कर्म स्वामी तत्रापराध्नुयात् ॥ कृते कर्मणि य स्वामी न द- 15 द्याद्वेतन भृते । राज्ञा दापयितव्य स्याद्वेतन चानुरूपत इति ॥ नारद । अनयन्

भाटकम् ।

भाटयित्वा तु भाण्ड च यानवाहने । दाप्यो भृतिचतुर्भाग सर्वामर्धपथे त्यजन् ॥ यान रथादि । वाहन साक्षादश्वादि ॥ कात्यायन । हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन य । नार्पयेत्कृतकृत्य सस्ताव दाप्य स भाटकम् ॥ नारद । परभूमौ गृह कृत्वा स्तोम दत्त्वा वसेत्तु य । स 20 तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥ स्तोमादिना वसित्वा तु परभूमावनिश्चित । यायेव तृणकाष्ठानि लिष्टका विनिवेशिता ॥ विनिर्गच्छस्तु तत्सर्वं भूमिस्वामिनि वेद- येत् ॥ स्तोमो भाटकम् ॥

॥ इति वेतनादानम् ॥

## ॥ अथ संविद्व्यतिक्रम ॥

नारद । पाखण्डिनैगमादीना स्थिति समय उच्यते । समयस्यानपाकर्म तद्वि- 25 वादपद स्मृतम् ॥ पाखण्डिन वेदमार्गविरोधिनो वाणिज्यादिकरा । नैगमास्तद-

(१) वी० प० १२८ पृ० २ मि० व्य० प० ७५ पृ० २ भृता इत्यत्र भृत्ये इति मिता क्षरायाम्

(२) सदीर्घस्यापि कालस्य स्व इति मिता क्षरायाम

(३) वी० प० १२८ पृ० २, मि० व्य० प० ७५ पृ० २

(४) वी० प० १२८ पृ० २

(५) वी० प० १२९ पृ० १

(६) वी० प० १२९ पृ० २

(७) वी० प० १२९ पृ० २ क० वि० यथा इत्यत्र यदा इति वीरमित्रोदयकल्पतरो..

(८) वी० प० १३० पृ० १, क० वि०

(९) वी० प० १२९ पृ० २ व्य० मा०

(१०) वी० प० १२९ पृ० २ क० वि० व्य० मा०

(११) वी० प० १२९ पृ० २ क० वि०

(१२) वी० प० १३० पृ० २, मि० व्य० प० ७७ पृ० १ क० वि०, व्य० मा०

विरोधिनः । आदिपदेन त्रैविद्या गृह्यन्ते ॥ तत्र राजकृत्यमाह बृहस्पतिः । वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः । आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥ अनाच्छेद्यकरास्तेभ्यः प्रदद्याद्गृहभूमयः[1] । मुक्तभाव्याश्च[2] नृपतिर्लेखयित्वा स्वशासने ॥ अनाच्छेद्योऽग्राह्यः करो याभ्यस्ता अनाच्छेद्यकराः । मुक्तभाव्याः मुक्तं उत्सृष्टं भाव्यं भूम्यादिफलं 5 यासां ता इत्यर्थः ॥ तेषां च श्रोत्रियादीनां धर्ममाह याज्ञवल्क्यः (व्य० श्लो० १८६) । निजधर्माविरोधेन यस्तु सामयिको भवेत् । सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ नारदः । पाषण्डिनैगमश्रेणिपूगव्रातगणादिषु । संरक्षेत्समयं राजा दुर्गे जनपदेषु च[4] ॥ नानाजातीयानामेकजातीयं कर्म कुर्वतां सङ्घाताः श्रेणयः । तेषामेव भिन्नजातीयं कर्म कुर्वतां सङ्घाः पूगाः । व्राताः ज्ञातिसम्बन्धिबन्धूनां सङ्घाताः त एव कुलानीत्यपु-10 च्यन्ते । पाखण्डिनो नैगमाश्च व्याख्याताः । एतेषां पाखण्ड्यादीनां व्रातान्तानां सङ्घा गणाः ॥ एतेषां समयभेदे दण्डमाह याज्ञवल्क्यः (व्य० श्लो० १८७) । गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः । सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्[5] ॥

॥ इति संविद्व्यतिक्रमः ॥

---

## ॥ अथ क्रीतानुशयः ॥

15 नारदः । क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते[6] ॥ पण्यपरीक्षावधिमाह स एव । त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु । मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् । द्विपदामर्धमासं च पुंसां तद्द्विगुणं स्त्रियाः । दशाहं सर्वबीजानामेकाहं लोहवाससाम्[7] ॥ कात्यायनः । भूमेर्दशाहेऽनुशयः क्रेतुर्विक्रेतुरेव वा[8] ॥ बृहस्पतिः । अतोऽर्वाक् पण्यदोषस्तु 20 यदि सञ्जायते क्वचित् । विक्रेतुः प्रतिदेयं तत्क्रेता मूल्यमवाप्नुयात्[9] ॥ कात्यायनः । अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् । क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु[10] ॥ स्वपरीक्षया गृहीते तु नारदः । क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी । विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यवीक्षितम्[11] ॥ द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत् । द्विगुणं तत्तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥ नारदः । परिभुक्तं तु यद्वासः 25 क्लिष्टरूपं मलीमसम् । सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः[12] ॥

॥ इति क्रीतानुशयः ॥

पण्यपरीक्षावधिः ।

---

(१) गृहभूमीरित्यर्थः
(२) वी० प० १३० पृ० २, व्य० मा० 'मुक्तभाव्याश्च' इत्यत्र 'मुक्तभाव्यश्च' इति धारीमित्रोदये
(३) वी० प० १३० पृ० २, व्य० मा०, क० वि०.
(४) वी० प० १३१ पृ० १, व्य० मा०
(५) वी० प० १३२ पृ० १
(६) मि० व्य० प० ७१ पृ० २; वी० प० १३१ पृ० २, क० वि०, व्य० मा०
(७) वी० प० १३३ पृ० २, क० वि०, व्य० मा०
(८) वी० प० १३४ पृ० १
(९) वी० प० १३३ पृ० २, व्य० मा०
(१०) वी० प० १३४ पृ० १, व्य० मा०
(११) मि० व्य० प० ७१ पृ० २, वी० प० १३४ पृ० १, व्य० मा० क्रीत्वेत्यादिश्लोकान्ते 'ह्यविक्षतम्' इति मिताक्षरादिषु।
(१२) वी० प० १३४ पृ० २; व्य० मा०

## ॥ अथ विक्रीयासम्प्रदानम् ॥

नारद । विक्रीय पण्य मूल्येन क्रेतुर्यन्न प्रदीयते । विक्रीयासम्प्रदान तद्विवादपद मुच्यते[1] ॥ याज्ञवल्क्य (व्य० श्लो० २५४) । गृहीतमूल्य य पण्य क्रेतुर्नैव प्रयच्छति । सोदय तस्य दाप्योऽसौ दिग्लाभ च दिगागते[2] ॥ दिक् देशान्तरम् । तल्लाभो देशान्तरीयपण्यलाभ । सोदय सलाभम ॥ स एव (व्य० श्लो० २५६) । राजदैवोप 5 घातेन पण्ये दोषमुपागते । हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छत[3] ॥ स एव (व्य० श्लो० २५५) । हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत्[4] ॥ नारद । दीयमान न गृह्णाति क्रीत्वा पण्य च य क्रयी । विक्रीणानस्तद यत्र विक्रेता नापराध्नुयात् ॥ याज्ञवल्क्य । मत्तोन्मत्तेन विक्रीत हीनमूल्येन येन वा । अस्वतन्त्रेण मूढेन त्याज्य तस्य पुनर्भवेत् ॥ अप च सर्वो विधिमूल्ये दत्ते तुभ्यमेव देय नान्यस्येति विक्रेषा समये 10 कृते बोध्य । दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तित । अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रम इति नारदोक्ते ॥ सदोषपण्यविक्रये याज्ञवल्क्य । ज्ञात्वा सदोष य पण्य विक्रीणीताविचक्षण । तदेव द्विगुण दाप्यस्तत्सम विनय तथा ॥

॥ इति विक्रीयासम्प्रदानम् ॥

---

## ॥ अथ स्वामिपालविवाद ॥ 15

पालदापण पश्वादिनाशे याज्ञवल्क्य (व्य० श्लो० १६५) । पालदोषविनाशे तु पाले दण्डो विधीयते । अर्धत्रयोदश पणा स्वामिने द्रव्यमेव च । द्रव्य गवादि ॥ पश्वादिमरणनिश्चायकमाह मनु (अ० ८ श्लो० २३४) । कर्णौ चर्म च वालाश्च बस्ति स्नायु च रोचनाम् । पशुस्वामिषु दद्यात्तु मृतेष्वङ्काभिदर्शने[5] ॥ अङ्क शृङ्गादीति मदन ॥ गवादिप्रचारार्थभूभागमाह याज्ञवल्क्य (व्य० श्लो० १६७) । 20

गवादिप्रचारार्थं भूभाग ।

धनु शत परीणाहो ग्रामक्षेत्रान्तर भवेत् । द्वे शते खर्वटस्य स्यान्नगरस्य चतु शतम ॥ परीणाहो गवादिप्रचारार्था भूरयमेव परीहार । धनु शत परीहारो ग्रामस्य स्यात्समन्तत इति मनूक्ते (अ० ८ श्लो० २३७) ॥ अनेककारुकृषीवलयुक्तो ग्राम खर्वट ।

---

(१) मि० व्य० प० ८३ पृ० २ वी० प० ११४ पृ० २, क० वि० व्य० मा०
(२) वी० प० ११५ पृ० ६, क० वि० व्य० मा०
(३) वी० प० ११५ पृ० ३ क० वि० व्य० मा०
(४) वी० प० ११५ पृ० २ क० वि०
(५) वी० प० ११५ पृ० १ इद बृहस्पति वचनमिति वीरमित्रोदये । तत्रैव इति मूल्य भवेन च इति विवादचिन्तामणौ ।
(६) मि० व्य० प० ८४ पृ० १, वी० प० ११६ पृ० १ व्य० मा० विक्रय इति मितक्षरावीरमित्रोदययो ।
(७) वी० प० ११६ पृ० १, व्य० मा० इद बृहस्पतिवचनमिति माधववीरमित्रोदययो ।
(८) वी० प० ११० पृ० १ क० वि०
(९) मि० व्य० प० ८८ पृ० २ वी० प० ११० पृ० १ क० वि० व्य० मा० वचनान्ते ङ्कानि दर्शयेत् इति मितक्षरावीरमित्रोदययो
(१०) वी० प० ११० पृ० १ क० वि० व्य० मा०

बहुकण्टकसन्तान इति केचित् ॥ परसस्यादिभक्षणे पशुस्वामिनो दण्डमाह याज्ञवल्क्य (व्य० श्लो० १५९।१६०।१६१)। माषानष्टौ तु महिषी सस्यघातस्य कारिणी। दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥ भक्षयित्वोपविष्टाना यथोक्ताद्द्विगुणो दमः। सममेषा विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ यावत्सस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणः फलम्। गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति ॥ विवीत तृणकाष्ठादिसञ्चयस्थलम् ॥ एतदपवदत्युशना ॥ अदण्ड्याश्चोत्सवे गाव श्राद्धकाले तथैव च ॥ व्यास। आक्रम्य च द्विजैर्भुक्त परिक्षीणेऽथ बान्धवे. ॥ गोभिश्च नरशार्दूल वाजपेयाद्विशिष्यते ॥ उशना ॥ गोभिर्विनाशित धान्य यो नरः प्रतियाचते। पितरस्तस्य नाश्नन्ति नाश्नन्ति त्रिदिवौकस ॥

गवादीनां परसस्यभक्षणे दण्ड।

तत्रापवाद।

॥ इति स्वामिपालविवाद ॥

---

## ॥ अथ सीमाविवादः ॥

सीमाज्ञानोपायानाह बृहस्पतिः। करीषास्थितुषाङ्गारशर्कराश्मकपालिका। सिकतेष्टकगोवालकार्पासास्थीनि भस्म च ॥ प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ॥ अत्र साक्षिणा विशेषमाह याज्ञवल्क्यः (व्य० श्लो० १५२)। सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा। रक्तस्रग्वसना. सीमा नयेयुः क्षितिधारिणः ॥ नारद। नैकः समुन्नयेत्सीमा नरः प्रत्ययवानपि ॥ गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥ बृहस्पति। ज्ञातृचिह्नैर्विना साधुरेकोऽप्युभयसम्मत ॥ रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥ सत्यव्रत सोपवास सीमान दर्शयेन्नरः ॥ कात्यायन। सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ॥ त्रिपक्षपक्षसप्ताह दैवराजिकमिष्यते ॥ मनु (अ० ८ श्लो० २५७)। यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिण ॥ विपरीत नयन्तस्तु दाप्यास्तु द्विशत दमम् ॥ नारद। अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये। सर्वे पृथक् पृथग् दण्ड्या राज्ञा मध्यमसाहसम् ॥ कात्यायन। बहूनां तु गृहीतानां न सर्वे निर्णयं यदि। कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥ याज्ञवल्क्य (व्य० श्लो० १५३)। अभावे ज्ञातृचिह्नाना राजा सीम्न प्रवर्तिता ॥ मनु (अ० ८ श्लो० २६५)। सीमायामविषह्याया

तत्र साक्षिण ॥

(१) वी० प० १२८ पृ० १, व्य० मा०
(२) वी० प० १२९ पृ० २, क० वि०, मि० व्य० प० ६८ पृ० २
(३) वी० प० १२९ पृ० १
(४) क० वि०
(५) वी० प० १४० पृ० १, क० वि०, व्य० मा०
(६) मि० व्य० प० ६६ पृ० २, वी० प० १४१ पृ० १, व्य० मा०
(७) वी० प० १४१ पृ० १ क० वि०, व्य० मा०
(८) मि० व्य० प० ६६ पृ० १, वी० प० १४१ पृ० १, क० वि०, व्य० मा०
(९) मि० व्य० प० ६६ पृ० १, वी० प० १४१ पृ० १, क० वि०
(१०) मि० व्य० प० ६६ पृ० १, वी० प० १४१ पृ० २ व्य० मा०
(११) वी० प० १४२ पृ० १ क० वि०

स्वयं राजा च धर्मवित् । प्राग्देशाद्भूमिमेकेषामुपकारादिति स्थितिः ॥ स एव । निवेशकालादारभ्य गृहद्वारापणादिकम् । येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥ कात्यायनोऽपि ॥ मेखलाभ्रमनिष्कासगवाक्षान्नोपरोधयेत् । प्रणालीं गृहवास्तु च पीडयन् दण्डभाग्भवेत् ॥ मेखला भित्तिमूलबन्धः । भ्रमो जलनिर्गमः । निष्कासो हर्म्यादिविनिर्गतकाष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशनस्थलमिति मदनः । धूमनिष्कास इति क्वचित्पाठः धूमनिर्गमार्थं गवाक्षादि इति तदर्थः आदिपदेन परभित्त्यादि ॥ स एव । निवेशसमयादूर्ध्वं नैते योज्याः कदाचन । दृष्टिपातं प्रणालीं च न कुर्यात्परवेश्मसु ॥ बृहस्पतिः । वर्चस्स्थानं वह्निचयं गर्तोच्छिष्टाम्बुसेचनम् । अश्वारात्परकुड्यस्य न कर्तव्यं कथंचन ॥ वर्चस्स्थानं शौचस्थानम् । अश्वारादिति समीपे ॥ कात्यायनः । विण्मूत्रोदकसेकं च वह्निश्वभ्रनिवेशनम् ॥ अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥ बृहस्पतिः । यान्त्यायान्ति जना येन पशवश्चानिवारिताः । तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥ नारदः । अवस्करस्थलश्वभ्रभ्रमस्यन्दनिकादिभिः । चतुष्पथसुरस्थानराजमार्गांश्च रोधयेत् ॥ कात्यायनः । सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः । अनिषिद्धा यथाकालं राजमार्गः स उच्यते ॥ बृहस्पतिः । यस्तत्र सङ्करं श्वभ्रं वृक्षारोपणमेव च । कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः ॥ मनुः (अ० ९ श्लो० २८२) । समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि । स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥ कात्यायनः । तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् । अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥ याज्ञवल्क्यः (व्य० श्लो० १५५) । मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा । क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥ मनुः (अ० ८ श्लो० २६४) । गृहं तडागमारामं क्षेत्रं वा भीषया हरन् । शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः ॥ कात्यायनः । सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः । फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत् ॥ कात्यायनः । अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंस्थिताः । स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिताः ॥ याज्ञवल्क्यः (व्य० श्लो० १५७) । स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् । उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः[10] ॥ स एव (व्य० श्लो० १५६) । न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः । परभूमिं हरन्कूपः स्वल्पक्षेत्रो बहूदकः ॥ न निषेध्य इत्यनुषङ्गः ॥ नारदोऽपि । परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते । महागुणोऽल्पदोषश्चेद्वृद्धिरिष्टा

गृहद्वारादौ सन्ततो भोगः प्रमाणम् ।

मर्यादाभेदे ।

---

(१) मि० व्य० प० ६६ पृ० २ वी० प० १४२ पृ० १ क० वि०

(२) वी० प० १४२ पृ० १ क० वि० व्य० मा० इदं बृहस्पतिवचनमिति वीरमित्रोदयकमलाकरमाधवेषु

(३) वी० प० १४२ पृ० २ क० वि०

(४) वी० प० १४३ पृ० १ क० वि०

(५) वी० प० १४३ पृ० १ क० वि० व्य० मा०

(६) वी० प० १४३ पृ० १

(७) वी० प० १४३ पृ० २, क० वि०, व्य० मा०

(८) वी० प० १४३ पृ० २ क० वि०

(९) वी० प० १४३ पृ० २ व्य० मा०

(१०) वी० प० १४४ पृ० १ व्य० मा०

(११) वी० प० १४४ पृ० १ क० वि०

क्षये सति[1] ॥ नारदः । पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः । सेतुं प्रवर्तयेद्यस्तु न स तत्फलभाग्भवेत्[2] ॥ व्यासः । क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत् । स्वामिने स शदं दाप्यो राज्ञे दण्डं च तत्समम्[3] ॥ शदं क्षेत्रोत्पत्त्यर्हफलम् ॥

॥ इति सीमाविवादः ॥

---

5 ॥ अथ वाक्पारुष्यम् ॥

बृहस्पतिः । देशग्रामकुलादीनां क्षेपः पापे नियोजनम् । द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥ भगिनीमातृसम्बन्ध उपपातकशंसनम् । पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥ अभक्ष्यापेयकथनं महापातकदूषणम् ॥ पारुष्यमुत्तमं प्रोक्तं तीव्रमर्माभिघट्टनमिति[4] ॥ द्रव्यं विना द्रव्यवैशिष्ट्यं विना केवलं वाकृतमेवेत्यर्थः । 10 अभिघट्टनमुद्घाटनम् ॥ विष्णुः । समवर्णाक्रोशने द्वादश पणान्दण्ड्यः ॥ स्मृत्यन्तरे । पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः । विशेषश्चेन्न दृश्येत विनयः स्यात्समस्तयोः[5] ॥ नारदः । पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् । पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः[6] । मनुः (अ० ८ श्लो० २६७) । शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति । वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति[7] ॥ बृहस्पतिः । विप्रे शतार्धं दण्डस्तु 15 क्षत्रियस्याभिशंसने । विशस्तथार्धपञ्चाशच्छूद्रस्यार्धत्रयोदश[8] ॥ शूद्रविषये स एव । धर्मोपदेशकर्ता च वेदोदाहरणान्वितः । आक्रोशकस्तु विप्राणां जिह्वाच्छेदेन दण्ड्यते[9] ॥ मनुः (अ० ८ श्लो० २७५) । मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् । आक्षारयञ्छतं दाप्यः पन्थानं चाददद्गुरोः[10] ॥ भ्राता ज्येष्ठः पित्रादिसाहचर्यात् । मात्रादीनां सापराधत्वे जायायाश्च निरपराधत्वे दण्ड इति मिताक्षरादिषु (व्य० प० 20 ७७ पृ० १) ॥ याज्ञवल्क्यः (व्य० श्लो० २०८।२०९) । बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः । शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ॥ अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश । तथाशक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥ स एव (व्य० श्लो० २०५।२११)। अभिगन्तास्मि भगिनीं मातरं वा तवेति च । शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥ त्रैविद्यनृपदेवानां दण्ड उत्तमसाहसः ॥ नारदः । पतितं पतित-

---

(१) वी० प० १४४ पृ० २, क० वि०, व्य० मा०
(२) वी० प० १४४ प० १, मि० व्य० प० ६७ पृ० २, क० वि०, व्य० मा०
(३) वी० प० १४४ पृ० २
(४) वी० प० १४८ पृ० २ व्य० मा०
(५) वी० प० १४९ पृ० १
(६) वी० प० १४५ पृ० १, व्य० मा० एतद्वचनं नारदीयमिति माधवाचार्यमित्रोदययोः
(७) वी० प० १४५ पृ० २, क० वि०, मि० व्य० प० ७८ पृ० २, व्य० मा०
(८) मि० व्य० प० ७८ पृ० २; वी० प० १४९ पृ० १, क० वि०
(९) वी० प० १४९ पृ० २.
(१०) वी० प० १४९ पृ० २, मि० व्य० प० ७७ पृ० १, व्य० मा०, क० वि० तृतीयचरणे 'श्वशुरं' इत्यत्र 'तनयं' इति मनुस्मृतिपुस्तकेषु पाठो दृश्यते
(११) वी० प० १४९ पृ० २, क० वि०, व्य० मा०.
(१२) 'शेत' इति मिताक्षरायाम्
(१३) वी० प० १५० पृ० १, क० वि.

त्युक्त्वा चौर चौरेति वा पुन । वचनात्तुल्यदोष स्यान्मिथ्या द्विर्दोषवान्‌ व्रजेत्‌ ॥ **याज्ञवल्क्य** (व्य० श्लो० २०४) । सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम । क्षेप करोति चेद्दण्ड्य पणानर्धत्रयोदश ॥ **उशना** । मोहा प्रमादा सङ्घर्षा प्रीत्या वोक्त मयेति य । नाहमेव पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत्‌ ॥

॥ इति वाक्पारुष्यम ॥ 5

---

## ॥ अथ दण्डपारुष्यम्‌ ॥

**नारद** । परगात्रेष्वभिद्रोहो हस्तपादायुधादिभि । भस्मादिभिश्चोपघातो दण्ड-पारुष्यमुच्यते ॥ **बृहस्पति** । आकृष्टस्तु समाक्रोशस्ताडित प्रतिताडयन । हत्वाऽप राधिन चैव नापराधी भवेन्नर इति ॥ **कात्यायन** । कर्णघ्राणपदाक्षीणि जिह्वाशि-श्नकरस्य च । छेदने चोत्तमो दण्डो भेदने मध्यमो भृगु ॥ **याज्ञवल्क्य** (व्य० 10 श्लो० २१३।२१४) । भस्मपङ्करज स्पर्शे दण्डो दशपण स्मृत । अमेध्यपार्ष्णि निष्ठ्यूतस्पर्शने द्विगुण स्मृत ॥ समेष्वेव परस्त्रीषु द्विगुणस्तूत्तमेषु च । हीनेष्वर्धं दमो मोहमदादिभिरदण्डनम ॥ पार्ष्णि पादपश्चाद्भाग ॥ **कात्यायन** । छर्दिमूत्रपु-रीषाद्यैरापाद्य स चतुर्गुण । षड्गुण कायमध्ये स्यान्मूर्ध्नि त्वष्टगुण स्मृत ॥ **याज्ञव ल्क्य** (व्य० श्लो० २१६) । उद्गूर्णे हस्तपादे तु दशविंशतिको दमौ । परस्पर तु 15 सर्वेषा शस्त्रे मध्यमसाहस ॥ स एव (व्य० श्लो० २१७।२१८) । पादकेशांशुककर ग्रहोल्लुञ्चनेषु पणा दश । पीडाकर्षांशुकावेष्टपादाध्यासे शत दम ॥ शोणितेन सम दु ख कुर्वन्‌ काष्ठादिभिर्नर । द्वात्रिंशत पणान्दण्ड्यो द्विगुणो दर्शनेऽसृज ॥ पाडे त्यादि अंशुकेनावेष्ट्य दृढमाकृष्य पादेनाध्यासे शतमित्यर्थ ॥ स एव । (व्य० श्लो० २१९।२२५) । करपाददतो भङ्गे भेदने कर्णनासयो । मध्यो दण्डो व्रणोद्भेदे मृतक 20 ल्पहते तथा ॥ विप्रपीडाकर छेदामङ्गमब्राह्मणस्य तु । उद्गूर्णे प्रथमो दण्ड संस्पर्शे तु तदर्धिक ॥ **मनु** (अ० ८ श्लो० २७९।२८०) । येन केनचिदङ्गेन हिंस्याच्छ्रे यासमन्त्यज । छेत्तव्य तत्तदेवास्य तन्मनोरनुशासनम्‌ ॥ पाणिमुद्यम्य दण्ड वा पा णिच्छेदनमर्हति ॥ **कात्यायन** । वाक्पारुष्ये यथैवोक्ता प्रातिलोम्यानुलोमत । तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम ॥ **विष्णु** । एक बहूना निघ्नता प्रत्येकश 25

---

(१) वी० प० १६० पृ० १
(२) वी० प० १४८ पृ० २
(३) वी० प० १६० पृ० २ क० वि
(४) मि० व्य० प० ७८ पृ० २ वी० प० १४५ पृ० १ क० वि० व्य० मा०
(५) वी० प० १४५ पृ० २
(६) वी० प० १४६ पृ० १ कायाध्यासपादा क्षि इति प्रथमचरणो वीरमित्रोदये स एव पाठ साधु
(७) वी० प० १४५ पृ० २ व्य० मा०
(८) मि० व्य० प० ७९ पृ० १ वी० प० १४५ पृ० २ क० वि व्य० मा०
(९) वी० प० १४६ पृ० १ क० वि०, व्य० मा०
(१०) वी० प० १४६ पृ० १।२ व्य० मा०
(११) मि० व्य० प० ७९ पृ० २ वी० प० १४६ पृ० २ व्य० मा० क० वि०
(१२) मि० व्य० प० ८० पृ० १ वी० प० १४६ पृ० २ क० वि० व्य० मा०

उक्तो दण्डो द्विगुणो ॥ कात्यायन । देहेन्द्रियविनाशे तु यथा दण्ड प्रकल्पयेत् । तथा तुष्टिकर देय समुत्थान च पण्डितै ॥ तुष्टिकर ताडिततोपकरम । समुत्थान मौपधादिमूल्य च पण्डितैरभिज्ञै कल्पित देयमित्यर्थ ॥ पशुताडनादौ याज्ञवल्क्य (व्य० श्लो० २२५।२२६)। दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा । 5 दण्ड क्षुद्रपशूना तु द्विपणप्रभृति क्रमात् ॥ लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च । महापशुषु चैतेषु स्थानेषु द्विगुणो दम ॥ वृक्षोपघाते मनु (अ० ८ श्लो० २८५)। वनस्पतीना सर्वेषामुपभोगो यथा यथा । तथा तथा दम कार्यो हिंसायामिति धारणा ॥

॥ इति दण्डपारुष्यम् ॥

---

10 ## ॥ अथ स्तेयम् ॥

तदुपयोगितया त्रिविध द्रव्यमाह नारद । मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् । शमीधान्य कृतान्न च क्षुद्रद्रव्यमुदाहृतम् ॥ वास कौशेयवर्ज च गोवर्ज पशवस्तथा । हिरण्यवर्ज लोह च मध्य व्रीहियवादि च ॥ हिरण्यरत्नकौशेय स्त्रीपुङ्गोगजवाजिन । देव- 15 ब्राह्मणराज्ञा च विज्ञेय द्रव्यमुत्तमम् ॥ तत्र प्रकाशतस्करांस्तावदाह स एव । नैगमा वैद्यकितवा सभ्योत्कोचकवञ्चका । दैवोत्पातकरा क्षुद्रा शिल्पज्ञा प्रतिरूपका ॥ अक्रियाकारिणश्चैव मध्यस्था कूटसाक्षिण । प्रकाशतस्करा ह्येते तथा कुहकजीविन ॥ स्मृत्यन्तरेऽपि । प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिता । उत्कोचका सोपधिका वञ्चका पापयोषित ॥ प्रतिरूपकराश्चैव मङ्गलादेशवृ- 20 त्तय । इत्येवमादयो ज्ञेया प्रकाशास्तस्करा भुवि ॥ बृहस्पति । प्रच्छाद्य दोष व्यामिश्र्य पुन सस्कृत्य विक्रयी । पण्य तद्द्विगुण दाप्यो वणिग्दण्ड च तत्समम् ॥ अज्ञातौषधिमन्त्रस्तु यस्तु व्याधेरतत्त्ववित् । रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चौरवद्भिषक् ॥ कूटाक्षदेविन क्षुद्रा राजभाव्यहराश्च ये । गणका वञ्चकाश्चैव दण्ड्यास्ते कितवा स्मृता ॥ अन्यायवादिन सभ्यास्तथैवोत्कोचजीविन ॥ विश्वस्त- 25 वञ्चकाश्चैव निर्वास्या सर्व एव ते ॥ ज्योतिर्ज्ञान तथोत्पातमविदित्वा तथा नृणाम् । शकुनादि च ये ब्रूयुर्विनेयास्ते प्रयत्नत ॥ दण्डाजिनादिभियुक्तमात्मान दर्शयन्ति ये । हिंसन्ति छद्मना नृणा वध्यास्ते राजपूरुषै ॥ स्वल्पमूल्य तु सस्कृत्य नयन्ति बहुमूल्यताम् । ये चाज्ञकान्वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारत ॥ हेमरत्नप्रवालाद्यान्

तद्द्रव्यभेदा । प्रकाशतस्करा । तेषां दण्डा ।

---

(१) वी० प० १४० पृ० २
(२) वी० प० १४६ पृ० २ क० वि०
(३) वी० प० १४० पृ० २ क वि व्य मा०
(४) वी० प १४० पृ १ क० वि०
(५) वी० प० १५० पृ० २ क० वि०
(६) वी० प० १५१ पृ० १ क० वि० व्य० मा०
(७) वी० प० १५१ पृ० १ क० वि० व्य० मा० एतद्वचनद्वय नारदीयमिति वीरमित्रोदय माधवकमलाकरेषु

ह्विमान् कुर्वते तु ये । क्रेतुर्मूल्य प्रदाप्यास्ते राज्ञे च द्विगुण दमम् ॥ मध्यस्था वञ्चका स्युश्चेद्रागलोभादिना यदा । साक्षिणश्चा यथा ब्रूयुर्दाप्यास्ते द्विगुण दमम् ॥ **व्यास** । साधनाश्रिता रात्रौ यदि प्रच्छन्नचारिण । अविज्ञातनिवासाश्च ज्ञेया प्रच्छन्नतस्करा ॥ स एव । उत्क्षेपक सन्धिभेत्ता पान्थमुड्ग्रन्थिमोचक । स्त्रीपुंसो-ऽश्वपशुस्तेयी चौरो नवविध स्मृत ॥ सन्धिभिस्त्यादे ॥ **याज्ञवल्क्य** (व्य० श्लो० 5 २७४) । उत्क्षेपकग्रन्थिभेदौ करसन्दशहीनकौ । कार्यौ द्वितीयापराधे करपाददविहीनकौ ॥ सन्दशसतर्जन्यङ्गुष्ठो ॥ **मनु** । सन्धि भित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्करा । तेषा छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥ **बृहस्पति** । तथा पान्थमुषो वृक्षे गले बद्ध्वावलम्बयेत् ॥ अङ्गुली ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे । द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ अङ्गुली तर्जन्यङ्गुष्ठौ ॥ द्रव्य गृहीत्वा चौर 10 पलायने विशेषमाह **नारद** । गोचरे यस्य मुष्येत तेन चौर प्रयत्नत । ग्राह्यो दाप्योऽथवा द्रव्य पद यदि न निर्गतम ॥ निर्गते पुनरेतस्मान्न चेद्यत्र पातितम् । सामन्ता मार्गपालाश्च दिग्पालाश्चैव दापयेत् ॥ **याज्ञवल्क्योऽपि** (व्य० श्लो० २७२) । स्वसीम्नि दद्याद्ग्रामस्तु पद वा यत्र गच्छति । पञ्चग्रामी बहि क्रोशाद्दशग्राम्यथवा पुनरिति ॥ स्त्रीहरणे **व्यास** । स्त्रीहर्ता लोहशयने दग्धव्यो वै कटाग्निना । नर 15 हर्ता हस्तपादौ छित्त्वा स्थाप्यश्चतुष्पथे ॥ **बृहस्पति** । गोहर्तुर्नासिका छित्त्वा बधा न्वमिति वर्जयेत् ॥ **नारद** । सर्वस्व हरतो नारी कन्या तु हरतो वध । वाजिवारणलोहाना चाददीत बृहस्पति ॥ सर्वस्वमित्यनुषङ्ग ॥ **व्यास** । पशुहर्तुस्त्वर्धपाद तीक्ष्णशस्त्रेण कर्तयेत् ॥ **नारद** । महापशु स्तेनयतो दण्ड उत्तमसाहसम् । मध्यम मध्यमपशून पूर्वं क्षुद्रपशू कृते ॥ **मनु** (अ० ८ श्लो० ३२०) । धान्य दशभ्य कुम्भे 20 भ्यो हरतोऽभ्यधिके वध । शेषेष्वेकादशगुण दाप्यस्तस्य च तद्धनम् ॥ कुम्भो विंशति प्रस्थ ॥ स एव (अ० ८ श्लो० ३२३) । मुख्याना चैव रत्नाना हरणे वधमर्हति ॥ **नारद** । सुवर्णरजतादीनामुत्तमाना च वाससाम । रत्नाना चैव सर्वेषा शतादभ्यधिके वध ॥ **मनु** (अ० ८ श्लो० ३२१।३२२) । सुवर्णरजतादीनामुत्तमाना च वाससाम् ॥ पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते । शेषेष्वेकादशगुण मूल्याद्दण्ड 25

(१) वी० प० १५१ पृ० २ व्य० मा०

(२) वी० प० १५१ पृ० १ क० वि०

(३) वी० प० १५१ पृ० १ क० वि० व्य० मा०

(४) वी० प० १५१ पृ० २ क० वि०

(५) मि० व्य० प० ८८ पृ० २ वी० प० १५२ पृ० २ क० वि० मनुस्मृतिपुस्तकेष्वपीद वचनं न दृश्यत

(६) वी० प० १५२ पृ० १ क० वि व्य० मा०

(७) वी० प० १५२ पृ० १ मि० व्य० प० ८० पृ० २ क० वि० व्य० मा० यद्यपीद बृहस्पतिवचनमितीत प्रतीयते तथापि मिताक्षरादिषु मन्वादिग्रन्थस्थस्य वचनस्योपन्यस्तत्वात् माधवग्रन्थे चैतद्विषयकबृहस्पतिवचनोपन्यस्यादर्शनादिद मनुवचनमिति निश्चीयते । मनुस्मृतिपुस्तकेष्वपीदमुपलभ्यते (अ० ९ श्लो० २७७)

(८) अत्र (ङ) (ञ) चिह्नितपुस्तकयोरिदम धिकं दृश्यते ॥ नारद । प्रथमे ग्रन्थिभेदानामङ्गुल्यङ्गुष्ठयोर्वध इति

(९) क० वि० व्य० मा० मि० व्य० प० ८० पृ० १

(१०) क० वि० व्य० मा०

(११) वी० प० १५२ पृ० १ क० वि०

(१२) वी० प० १५२ पृ० १

(१३) मि० व्य० प० ८८ पृ० १ वी० प० १५२ पृ० १ क० वि० व्य० मा०

प्रकल्पयेत् ॥ याज्ञवल्क्य (व्य० श्लो० २७०)। सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥ मनु (अ० ९ श्लो० २४०)। प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम्। नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसम् ॥ याज्ञवल्क्योऽपि (व्य० श्लो० २७०)। चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः॥ नारदः। भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम्। शक्ताश्च ये उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥ तद्दण्डभागिनश्च ॥

॥ इति स्तेयम् ॥

---

## ॥ अथ साहसम् ॥

तत्स्वरूपं नारदेनोक्तम्। सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः। तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥ बृहस्पतिः। मनुष्यमारणं चौर्यं परदाराभिमर्शनम्। 10 पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥ उभयं वाक्पारुष्यं दण्डपारुष्यं चेति ॥ नारदः। फलमूलोदकादीनां क्षेत्रोपकरणस्य च। भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥ वासः पश्वन्नपानानां गृहोपकरणस्य च। एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥ व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम्। प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥ याज्ञवल्क्यः (व्य० श्लो० २७३)। बन्दिग्राहांस्तथा वाजिकुञ्जराणां 15 च हारिणः। प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ॥ बृहस्पतिः। प्रकाशघातका ये तु तथा चोपांशुघातकाः। ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्वधैरिति ॥ स एव। एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः। मर्मप्रहारको यस्तु घातकः स उदाहृतः ॥ कात्यायनः। आरम्भकृत्सहायश्च तथा मार्गानुदेशकः। आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥ युद्धोपदेशकश्चैव तद्विनाशप्रवर्तकः। उपेक्षाकार्ययुक्तश्च दोषवक्तानुमोदकः ॥ अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः। यथाशक्त्यनुरूपं तु दण्डमेषां प्रकल्पयेत्।

घातकाः। 20 सहायादयः।

विप्रदण्डे विशेषमाह नारदः ॥ अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः। वधादृते

---

(१) मि० व्य० प० ८८ पृ० २ वी० प० १९२ पृ० १ क० वि० व्य० मा०
(२) वी० प० १९२ पृ० २ व्य० मा०
(३) मि० व्य० प० ८७ पृ० १ वी० प० १९२ पृ० २ व्य० मा०
(४) वी० प० १९२ पृ० १ क० वि०
(५) मि० व्य० प० ८९ पृ० १ वी० प० १९२ पृ० १
(६) वी० प० १९३ पृ० १ क० वि० व्य० मा
(७) मि० व्य० प० ८७ पृ० १ वी० प० १९३ पृ० १ क० वि० व्य० मा०
(८) वी० प० १९३ पृ० १ क० वि० व्य० मा० नरान् इत्यत्र नृपः इति पा० (क) (ख) (घ) (ङ)
(९) वी० प० १९४ पृ० १; क० वि० व्य० मा०
(१०) वी० प० १९४ पृ० १ क० वि० मर्मप्रहारका ये तु घातकास्त उदाहृताः इत्युत्तरार्धम् (क) (ख) (घ) (ङ) (छ) (ज) चिह्नितपुस्तकेषु। वीरमित्रोदयकमलाकरयोस्तु मूले लिखित एव पाठो दृश्यते। स एव तयोरभिमतः।

ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥ शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन चेति ॥ आततायप्यपि विप्रो न वध्यः । नाततायिवधे दोषोऽन्यत्र गोब्राह्मणादिति सुमन्तूक्तेः ॥ कात्यायन । आततायिनि चोत्कृष्टे तपःस्वाध्यायसंयुते । वधस्तत्र तु नैव स्यात्पापे हीने वधो भृगुः ॥ आततायिन आह स एव । उद्यतासिर्विषाग्निश्च शापोद्यतकरस्तथा । आथर्वणेन हन्ता च पिशुनश्चापि राजनि ॥ भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान्विजानीयात्सर्वानेवाततायिनः ॥ वसिष्ठोऽपि । अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ यत्तु मनुः (अ० ८ श्लो० ३५०) गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥ यच्च कात्यायनः । आततायिनमायान्तमपि वेदान्तपारगम् । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेदिति तदपिशब्दाद्वाशब्दाच्च ब्राह्मणभिन्नाततायिवधपरम् ॥ ब्राह्मणग्रहणं तु कैमुतिकन्यायार्थम् आततायी ब्राह्मणोऽपि वध्यः किमुतान्य इति मिताक्षरायाम् (मि० व्य० प० १० पृ० १) । उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ॥ निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेदिति गार्ग्योक्तेः । स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् । अहत्वा भ्रूणहा स स्यान्न हत्वा भ्रूणहा भवेदिति बृहस्पत्युक्तेश्च ॥ स्ववधार्थमागच्छन्नाततायिब्राह्मणोऽपि वध्य एव । क्षेत्रदारादिहरो ब्राह्मणो न वध्यः क्षत्रियादिस्तु तादृशोऽपि वध्य इति चन्द्रिकाशयः । युक्तश्चायम् । मनुकात्यायनगार्ग्यबृहस्पतिवचसां स्ववधोद्यताततायिविशेषविषयतया सामान्यविषययोः पूर्वोक्तसुमन्तुकात्यायनीयवचसोर्बाधस्योचितत्वात् ॥ यत्तु बृहस्पतिः आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् । यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेदिति तदपि स्ववधोद्यतभिन्नाततायिपरम् ॥ किंच ॥ आततायिद्विजाग्र्याणां धर्मयुद्धे न हिंसनमिति कलौ वधोद्यतस्याततायिनो विप्रस्य हननं निषिद्धम् ॥ तस्य विधितोऽप्राप्तौ कलौ निषेधो व्यर्थः स्यात् । सर्वेषामपि कलिनिषेधानां विधिप्राप्तगोचरत्वस्य इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिण इति धर्मपदस्वरसेन सर्वनिबन्धेषु व्यवस्थापितत्वात् ॥ अतः कलौ स्ववधोद्यतोऽप्याततायि-

---

(१) वी० प० १५३ पृ० २ क० वि०
(२) मि० व्य० प० १० पृ० १ वी० प० ७ पृ० २
(३) वी० प० ८ पृ० १ तत्र द्वितीयचरणे त 'संयुते' इत्यत्र अन्यत इति पाठः । चतुर्थचरणस्तु पापे हीनवधे तु न इति
(४) मि० व्य० प० १० पृ० १ वी० प० ६ पृ० २
(५) वी० प० ६ पृ० २ मि० व्य० प० १० पृ० १ क० वि०
(६) मि० व्य० प० १० पृ० १ वी० प० ६ पृ० २ क० वि० पारगम् इत्यत्र रणे इति द्वितीयचरणान्ते पाठो मिताक्षरावीरमित्रोदयकमलाकरेषु
(७) क० वि०
(८) वीरमित्रोदये तु 'स्वाध्यायिनं कुले जातं हन्यादनाततायिनम् । न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति' इति वसिष्ठवचनमुक्तम् (प० ७ पृ० २)
(९) वी० प० ८ पृ० २, क० वि०
(१०) इदं हेमाद्रावादित्यपुराण इत्युपक्रम्य निर्णयसिन्धावुक्तम् (तृतीयपरिच्छेदे पूर्वार्धे प० ६२ पृ० २)
(११) धर्माब्धिसारे तृतीयपरिच्छेदे पूर्वार्धे प० ११९ पृ० १ इदं बृहन्नारदीय इत्युपक्रम्य निर्णयसिन्धावुक्तम् (तृतीयपरिच्छेदे पूर्वार्धे प० ६२ पृ० २)

विप्रो न वध्य । युगान्तरे तु वध्य एव ॥ अन्यस्त्वाततायिविप्र सर्वेष्वपि युगेष्ववध्य क्षत्रियादिस्त्वाततायी सर्वोऽपि सर्वयुगेषु वध्य इति दिक् ॥

हीनमध्योत्कृष्टद्रव्यहरणे दण्डमाह बृहस्पति । क्षेत्रोपकरण चैव पुष्पमूल फलानि च । विनाशयन् हरन्दण्ड्य शताद्यमनुरूपत ॥ पशुवस्त्रान्नपानानि गृहोपकरण तथा । हिंसयन् चोरयञ्छास्यो द्विशताद्य दम तथा ॥ स्त्रीपुंस्त्रीहेमरत्नानि देवविप्रधन तथा । यौपेय चोत्तमद्रव्यमेषा मूल्यसमो दम ॥ द्विगुणो वा कल्पनीय पुरुषापेक्षया नृपे । हर्ता वा घातनीय स्यात्प्रसङ्गविनिवृत्तये ॥ यौपेय स्त्रीधनम् । वाशब्द एवार्थे ॥ अत्र विनाशयन् हर्तेति पदद्वयरसात्साहसविषयमेतद्वच इति मदन ॥ साहसप्रयोजकदण्डमाह या

तत्प्रयोजकस्य दण्ड ।

ज्ञवल्क्य ( व्य० श्लो० २३१ ) । य साहस कारयति स दाप्यो द्विगुण दमम् । यश्चैवमुक्त्वाह दाता कारयेत्स चतुर्गुणम् ॥ द्वैगुण्य चातुर्गुण्य वा साक्षात्कर्तृदण्डापेक्षया ॥ साध्वीं विप्रा बलाद्गच्छतो दण्डमाह मनु ( अ० ८ श्लो० ३७८ ) । सहस्र ब्राह्मणो दण्ड्यो गुप्ता विप्रा बलाद्व्रजन् ॥ तादृश्या विप्राया क्षत्रियादेस्तु बृहस्पतिराह ॥ सहसा कामयेद्यस्तु धन तस्याखिल हरेत् । उत्कृत्य लिङ्ग वृषणौ भ्रामयेद्गर्दभेन तु ॥ कामयेत्परपत्नी गच्छेत् ॥ क्षत्रियादीनामनुलोमाना प्रतिलोमाना च बलात्सजातीयभार्यागमने दण्डमाह कात्यायन । स्त्रीषु कृतोपभोग स्यात्प्रसह्य पुरुषो यदा । वधे तस्य प्रवर्तेत कार्यातिक्रमण हि तत् ॥ स एव । अनिच्छन्ती तु या भुक्ता गुप्ता ता वासयेद्गृहे । मलिनाङ्गीमध शय्या पिण्डमात्रोपजीविनीम् ॥ स एव । हीनवर्णोपभुक्ता या त्याज्या वध्याथवा भवेत् ॥ वधस्त्वनिच्छन्त्या बोध्य ॥ हीनमध्यमोत्तमसाहसेषु दण्डमाह नारद । तस्य दण्ड क्रियापेक्ष प्रथमस्य शतावर । मध्यमस्य च शास्त्रज्ञैर्दृष्ट पञ्चशतावर ॥ उत्तमे साहसे दण्ड सहस्रावर इष्यते । वध सर्वस्वहरण पुरान्निर्वासनाङ्कने ॥ तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहस इति ॥ वधच्छेदनाद्युपदेशस्तु राजान प्रति नान्यस्य तस्यैव दण्डकरणेऽधिकारात ॥

॥ इति साहसम् ॥

## ॥ अथ स्त्रीसङ्ग्रहणम् ॥

बलात्परभार्यागमनस्य साहसत्वात्पूर्वमेव दण्ड उक्त ॥ छलेन सजातीयपरभार्यागमने त्वाह बृहस्पति । छद्मना कामयेद्यस्तु तस्य सर्वहरो दम । अङ्कयित्वा भगाङ्केन

(१) व्य० मा० क० वि०
( ) वि० र० १९० पृ० व्य० मा० क० वी०
(३) मि० व्य० प० ००पृ० १ वी० प १९९ पृ० २ क० वि०
(४) वी० प० १७४ पृ० ० व्य० मा० क० वि०
(५) वी० प० १७४ पृ० २ क० वि० विति

दण्डरोऽश वधे त्व इ। (क) (ख) (घ) (ङ) (छ) (ज) निष्कृतव्यतोऽपु 'वधस्तु इति च' विहितपुरुष
(६) क० वि०
(७) मि० व्य० प० ८१ पृ० १ वी० प० १४१ पृ० १

पुराभिर्ज्ञसयेत्ततं ॥ सर्वहर सर्वस्वहर ॥ अथ च दण्ड समायाम । हीनायामेतदर्धम् । उत्तमाया वध ॥ तथाच स एव । दमो नेय समाया यो हीनायामार्धिकस्तत । पुस कार्योऽधिकाया तु गमने सम्प्रमापणम् ॥ हीनमध्योत्तमत्रिविधस्त्रीसङ्ग्रहणे दण्डमाह स एव । त्रयाणामपि चैतेषा प्रथमो मध्य उत्तम । विनय कल्पनीय स्याद धिकोऽपि बलाद्दहे ॥ दुर्वृत्तस्य परस्त्रिया सह सम्भाषणे दण्डमाह मनु (अ० ८ 5 श्लो० ३५४) ।.परस्य प न्या पुरुष सम्भाष योजयेत्सह । पूर्वमाक्षारितो दोषै प्राप्नुयात्पूर्वसाहसम् ॥ निवारितयो स्त्रीपुंसयो सम्भाषणे दण्डमाह याज्ञवल्क्य (व्य० श्लो० २८५) । स्त्री निषेधे शत दण्ड्या द्विशत तु दम पुमान् ॥ प्रतिषेधे तयोर्दण्डो यथा सङ्ग्रहणे तथा ॥ प्रत्येकनिषेधविषय पूर्वमर्धम् उभयनिषेधे उत्तरम ॥ उभयोरनुरागकृतसम्भोगे दण्डमाह याज्ञवल्क्य (व्य० श्लो० २८६) । सजातावुत्तमो 10 दण्ड आनुलोम्ये तु मध्यम । प्रातिलोम्ये वध पुसो नार्या कर्णादिकर्तनम् ॥ कात्यायन । सर्वेषु चापराधेषु पुसो योऽर्थदम स्मृत । तदर्धं योषितो दद्युर्वधे पुसोऽङ्गकर्तनम् ॥ व्यभिचरितविप्रागमने तु मनु (अ० ८ श्लो० ३७८) । शतानि पञ्च दण्ड्य स्यादिच्छन्त्या सह सङ्गमे ॥ इद सजातीयापरम ॥ व्यभिचरितस्वनुलोमासु गमने स एव (अ० ८ श्लो० ३८५) । अगुप्ते वैश्यराजन्ये शूद्रां वा ब्राह्मणो व्रजन् । शता 15 नि पञ्च दण्ड्य स्यात्सहस्र त्वन्त्यजस्त्रियमिति ॥ यत्तु मनु (अ० ८ श्लो० ३८३) सहस्र ब्राह्मणो दण्ड दाप्यो गुप्ते तु ते व्रजन्निति तत्साध्वीपरम् ॥ शूद्रस्य प्रातिलोम्येन गमने दण्डमाह मनु (अ० ८ श्लो० ३७४) । शूद्रो गुप्तमगुप्त वा द्वैजात वर्णमावसन् । अगुप्त लिङ्गसर्वस्व गुप्त सर्वेण हीयते ॥ शूद्रो गुप्ता द्विजा गच्छन् लिङ्गच्छेदन सर्वस्वहरण च गुप्ता चेद्वधोऽधिक इति चाहति गुप्ता तु गच्छ सर्वस्वहरण वध 20 चार्हतीयर्थे ॥ गौतम । आर्यायैत्यभिगमने लिङ्गोद्धार सर्वस्वहरण च गुप्ता चेद्वधोऽधिक इति ॥ मनु (अ० ८ श्लो० ३७६) । ब्राह्मणी तु यद्यगुप्ता गच्छेतां वैश्यपार्थिवौ । वैश्य पञ्चशत कुर्या क्षत्रिय तु सहस्रिणम् ॥ स एव (अ० ८ श्लो० ३७७) उभावपि हि तावेव ब्राह्मण्या गुप्तया सह । विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥ स एव (अ० ८ श्लो० ३८२) । वैश्यश्चेत्क्षत्रिया गुप्ता वैश्या वा 25

---

(१) वी० प० १९९ पृ० १

(२) वी० प० १९४ पृ० २

(३) वी० प० १९९ पृ० १ श्लोकान्ते द्वैणाधिके इति ज चिह्नितपुस्तके वीरमित्रोदये च

(४) वी० प० १९६ पृ० १ क० वि०

(५) याद्दृ इति मिताक्षरायाम्

(६) वी० प० १९९ पृ० २ क० वि० व्य० मा० वचनादौ स इत्यत्र स्त्र इति पाठो मिताक्षरादिषु

(७) वी० प० १९९ पृ० २

(८) वी० प० १९९ पृ० २ क० वि०

(९) क० वि० प्रथमचरणे वैश्यराजन्ये इत्यत्र क्षत्रियावैश्ये इति क्वचित्पाठ स एव साधुरिति भाति

(१०) वी० प० १९९ पृ० २ क० वि० व्य० मा०

(११) मि० व्य० प० ९० पृ० २ वी० प० १९९ पृ० १ व्य० मा० यद्यगुप्ता गच्छेता इत्यत्र यद्यगुप्ता न सेवेता इति मिताक्षरामाधववीरमित्रोदयेषु

(१२) मि० व्य० प० ९० पृ० २ वी० प० १९९ पृ० २ क० वि० व्य० मा०

क्षत्रियो व्रजेत् । यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥ अगुप्तब्राह्मणीगमने यो
दण्डः स इत्यर्थः ॥ वसिष्ठः । राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्य
मग्नौ प्रास्येदेवं वैश्यो राजन्यायां मैथुनमाचरञ्छूद्रस्तु राजन्यवैश्ययोरिति ॥ नारदः ।
माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी
5 स्नुषा ॥ दुहिताचार्यभार्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णो-
त्तमा च या ॥ आसामन्यतमां गच्छन् गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनात्तत्र नान्यो
दण्डो विधीयते[3] ॥ याज्ञवल्क्योऽपि (प्रा० श्लो० २३२।२३३) । पितुः स्वसारं मातुश्च
मातुलानीं स्नुषामपि । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ आचार्यपत्नीं स्वसुतां
गच्छंस्तु गुरुतल्पगः । छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि ॥ अयं च दण्डो
10 न ब्राह्मणस्य । परदाराभिमर्शेषु प्रवृत्तान् महीपतिः । उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवास
येत् ॥ अब्राह्मणः सङ्ग्रहणे प्राणान्तं वधमर्हतीति ब्राह्मणाधिकारे बृहस्पतिवचनात् ॥
शङ्खलिखितौ । येन येनाङ्गेनापराधं कुर्यात्तत्तदस्य छेत्तव्यमन्यत्र ब्राह्मणात् ॥
ब्राह्मणस्य दास्यादिगमने दण्डमाह याज्ञवल्क्यः (व्य० श्लो० २९०) । अवरुद्धासु दा
सीषु भुजिष्यासु तथैव च । गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम् ॥ अवरुद्धा
15 स्वामिना पुरुषान्तरप्रतिषेधेन नियुक्ता ॥ नारदः । स्वैरिण्यब्राह्मणी वेश्या दासी
निष्कासिनी च या । गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥ आस्वेव तु
भुजिष्यासु दोषः स्यात्परदारवत् ॥ अब्राह्मणीति स्वैरिणीविशेषणम् ॥ स्वैरिणी स्वतन्त्रा
पुंश्चली ॥ निष्कासिनी कुटुम्बान्निर्गता पुंश्चली ॥ याज्ञवल्क्यः (व्य० श्लो०
२९४) । अन्त्याभिगमने लङ्कयः कुबन्धेन प्रवासयेत् । शूद्रस्तथान्त्य एव स्यादन्त्यस्या
20 र्यागमे वधः ॥ स्त्रीकृते सङ्ग्रहणे तस्या दण्डमाह नारदः । गृहमागत्य या नारी प्रलो
भ्य स्पर्शनादिना । कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥ ब्राह्मण्यादीनां
शूद्रादिगमने दण्डमाह यमः । वृषलं सेवते या तु ब्राह्मणी मदमोहिता । तां श्वभि
र्खादयेद्राजा संस्थाने वध्यघातिनाम् ॥ वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु ॥ वृषलः शूद्रः वध्यघातिनः सौनिकास्तेषां
25 स्थानं इत्यर्थः ॥ अयं च दण्डोऽत्यासक्ताविति चन्द्रिकायाम् ॥ व्यभिचारनिश्चयो
पायमाह याज्ञवल्क्यः (व्य० श्लो० २८३) । पुमान् सङ्ग्रहणे ग्राह्यः केशाकेशि परस्त्रिया
स्त्रिया । सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥ द्वयोरित्यनेनान्यतरेण प्रति
पन्नेऽपि व्यभिचारे न निश्चय ॥ दूषणमाह याज्ञवल्क्यः (व्य० श्लो० २८९) ।
शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसने ॥ पशून् गच्छञ्छतं दाप्यो दीनां स्त्रीं
30 गां च मध्यममिति ॥ तथा । अयोनौ गच्छतो योषां पुरुषं चाभिमेहतः ॥ चतुर्वि

(१) वी० प० १८८ पृ० १, क० वि० व्य० मा०
(२) व० वि०
(३) मि० व्य० प० ९० पृ० १।२ वी० प० १८८ पृ० २ क० वि० व्य० मा०
(४) क० वि० व्य० मा०
(५) वी० प० १८८ पृ० २ क० वि० व्य० मा०
(६) मि० व्य० ० ९२ पृ० २ वी० प० १८८ पृ० २ व्य० मा० क० वि०
(७) वी० प० १८७ पृ० १
(८) वी० प० १८७ पृ० २ क० वि०
(९) वी० प १८८ पृ० १ क० वि०, व्य० मा०
(१०) वी० प० १८७ पृ० १ क० वि०, व्य० मा० अन्तिमचरणे दीनां इत्यत्र हीनां इति मिताक्षरादिषु

शतिको दण्डस्तथा प्रव्राजितागमे ॥ दीना दु खिता स्वपत्नीमपि । स्त्रीसम्मुख पुरीषादि कुर्वत इत्यर्थ ॥

॥ इति स्त्रीसङ्ग्रहणम् ॥

## ॥ अथ स्त्रीपुन्धर्म· ॥

तत्र भर्तु सगुणपत्नीत्यागे दण्डमाह । अनुकूलामवाग्दुष्टा दक्षां साध्वी पतिव्रताम् । त्यजन् भार्यामवश्याप्यो राज्ञा दण्डेनवै पति ॥ याज्ञवल्क्य (आ० श्लो० ७६)। आज्ञासम्पादिनी दक्षा वीरसू प्रियवादिनीम् । त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरण स्त्रिया ॥ स्त्रिय प्रत्याह स एव (आ० श्लो० ७७)। स्त्रीभिर्भर्तृवच कार्यमेष धर्म पर स्त्रिया । आशुद्धे सम्प्रतीक्ष्यो हि महापातकदूषित ॥ 10

॥ इति स्त्रीपुन्धर्म ॥

## ॥ अथ द्यूतसमाह्वयौ ॥

याज्ञवल्क्य (व्य० श्लो० २०१)। ग्लाहे नृपतिना भागे प्रसिद्धे धूर्तमण्डले । जित ससभिक स्थाने दापयेदन्यथा न तु ॥ प्रसिद्धे अप्रच्छन्ने । धूर्तमण्डले द्यूतस्थाने । सभिको राजा कृतो द्यूताध्यक्ष । एव प्रकारेण जित राजा दापयेन्नान्यदित्यर्थ ॥ द्यूते कपटकर्तुर्दण्डमाह स एव (व्य० श्लो० २०२)। राज्ञा सचिह्न निर्वास्या कूटा- 15 क्षोपधिदेविन ॥ उपधि छलम् । राजाज्ञा विना द्यूते दण्डमाह मनु (अ० ९ श्लो० २२४) द्यूत समाह्वय चैव य कुर्यात्कारयेत वा ॥ तत्सर्वान् घातयेद्राजा शूद्राश्च द्विजलिङ्गिन ॥ द्विजलिङ्गमुपवीतवेदपाठादि ॥ द्यूतधर्म समा- समाह्वय । ह्वयेऽतिदिशति याज्ञवल्क्य (व्य० श्लो० २०३)। एष एव विधिर्ज्ञेय प्राणिद्यूते समाह्वये ॥ प्राणिद्यूत इति समाह्वयविशेषणम् तद्भिन्न इत्यर्थ ॥ 20

॥ इति द्यूतसमाह्वयौ ॥

## ॥ अथ प्रकीर्णकम् ॥

याज्ञवल्क्य (व्य० श्लो० २९५।२९६)। ऊन वाप्यधिक वापि लिखेद्यो राजशासनम् । पारदारिकचोरो वा मुञ्चतो दण्ड उत्तम ॥ अभक्ष्येण द्विज दुष्यन् दण्ड्य

(१) ; वी० प० ११० पृ० २ क० वि०
(२) वी० प० १११ पृ० ? क० वि० व्य० मा० एतदग्रे नारदीयमिति वीरमित्रे दर्श्यते इत्यत्र
(३) वी० प० १११ पृ० २ व्य० मा०
(४) वी० प० २२४ पृ० ५ क० वि० व्य० मा०
(५) वी० प० २२४ पृ० २ व्य० मा०
(६) वी० प० २२४ पृ० २ क० वि० व्य० मा०
(७) वी० प० २२५ पृ० १ क० वि० व्य० मा०; तृतीयचरण पंचौ इत्यत्र पौरे इति मिताक्षरादिषु

उत्तमसाहसम् । मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धकम् ॥ अभक्ष्यं सुरामूत्रपुरीषादि ॥

प्रकीर्णकम् ।

स एव (व्य० श्लो० २९७) । कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी । अङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् ॥ विमांसं गवादिमांसम् । चशब्देनाङ्गच्छेदनमपीति मिताक्षरायाम् (व्य० प० ९३ पृ० १) ॥
5 तथा (व्य० श्लो ३००) । शक्तो ह्यमोक्षयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा । प्रथमं साहसं दण्ड्यो विक्रुष्टे द्विगुणं तथा ॥ विक्रोश. क्रन्दनम् ॥ मनुः (अ० ८ श्लो० २९६। २९७।२९८) । मनुष्यमारणे क्षिप्रं चौरवत् किल्बिषी भवेत् । प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु ॥ क्षुद्रकाणां पशूनां तु हिंसने द्विशतो दमः । पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥ गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः । माषकस्तु भवेद्दण्डः
10 श्वशूकरनिपातने इति ॥ अयं दण्डो हतमूल्यदानानन्तरं बोध्यः ॥ याज्ञवल्क्यः (व्य० श्लो० ३०१।३०२) । जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम् । उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणं स्मृतम् ॥ उपजीव्य गृहीत्वा ॥ राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम् । तन्मन्त्रस्य च भेत्तारं जिह्वां छित्त्वा प्रवासयेत् ॥ अनिष्टं मरणादि । आक्रोशस्त्वद्राज्यध्वंसो भवतु इत्यादि ॥ मनुः (अ० ९ श्लो० २७५) । राज्ञः कोशापहर्तॄंश्च प्रतिकू-
15 लेष्ववस्थितान् । घातयेद्विविधैर्दण्डैररीणां चोपजापकान् ॥ याज्ञवल्क्यः (व्य० श्लो० ३०३) । मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा । राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥ मृताङ्गलग्नं मृतकवस्त्रादि ॥ स एव (व्य० श्लो० ३०४) । द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा । विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥ नेत्रद्वयभेत्तुराजनिषिद्धकर्मकर्तुर्विप्रवृत्त्या जीवितुश्च शूद्रस्यैतत्सर्वं ॥ श्राद्धभोजनार्थं तु यज्ञोप-
20 वीतधारणे तप्तशलाकया यज्ञोपवीतरेखा कार्येति स्मृत्यन्तरे मिताक्षरायाम् (व्य० प० ९४ पृ० १) ॥ व्यवहारान्यथाकारिणो दण्डमाह स एव (व्य० श्लो० ३०५। ३०६) दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु । सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥ यो मन्येताजितोऽस्मीति न्यायतोऽपि पराजितः । तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥ अत्र सर्वत्रानुक्तसङ्ख्येया सङ्ख्या पणविषयिणी ज्ञेया ॥ पणस्तु
25 कर्षोन्मितं ताम्रम् । कार्षिके ताम्रिके पण इति कोशात् । कर्षः पलचतुर्थांशः । वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणश्चतस्र इति भास्कराचार्योक्तश्च पणः ॥ उत्तमसाहसादिक ▯ साशीतिपणसाहस्रो दण्ड उत्तमसाहसः । तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृत इति ॥ तथा । उक्तापराधेषूक्तपरिमाणदण्डैर्दमनासम्भवेऽधिकोऽपि दण्डः ॥ यथाहापस्तम्बः । दण्डो दमनादित्याहुस्तेनादान्तान् दमये-
30 दिति ॥ तथा सर्वस्वापहारदण्डे विशेषमाह नारदः । आयुधान्यायुधीयानां वाद्यादीन्वाद्यजीविनाम् । वेश्याः स्त्रीणामलङ्कारान् वाद्यातोद्यादितद्विदाम् ॥ यद्य यस्योपकरणं

---

(१) वी० प० २५५ पृ० २. प० नि०, स्व० म० वीरमित्रोदये तु 'हस्त्यादिवधेषु च' इति पाठान्तरम्

(२) प० नि०, स्व० म०

(३) प० नि०

(४) अमरको० का० ३ व० ३ श्लो० ८८

(५) लीलावत्यां श्लो० ३

येन जीवन्ति कारुका । सर्वस्वहरणेऽप्येतत्र राजा हर्तुमर्हति ॥ अन्यायाद्गृहीतस्य दण्डस्य प्रतिपत्तिमाह याज्ञवल्क्यः (व्य० श्लो० ३०७)। राज्ञा ऽन्यायेन यो दण्डो गृहीतो वरुणाय तम् । निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥ त्रिंशद्गुणं वरुणोद्देशेन सङ्कल्प्य विप्रेभ्यो दद्यादित्यर्थः ॥

॥ इति प्रकीर्णकम् ॥ 5

---

चर्मण्वती तरणिजा शुभसङ्गमस्य सान्निध्यभाजि कृतशालिनि मध्यदेशे । ख्याता भरेह नगरी किल तत्र राजा राजीवलोचनरतो भगवन्तदेव ॥१

इति श्रीसङ्गरवंशावतंसमहाराजाधिराजश्रीभगवन्तदेवादिष्टश्रीमज्जगद्गुरुभट्टनारायणसूरिसूनुपण्डितशिरोरत्नमीमांसापारावारपारीणधुरीणभट्टशङ्करसूनोर्भट्टनीलकण्ठस्य कृते भगवद्भास्करे व्यवहारमयूखः समाप्तः ॥ 10

---

(१) बी० प० ११५पृ० २, क० वि०, व्य० मा०

# ॥ याज्ञवल्क्यधर्मशास्त्रम् ॥

## ॥ अथाचाराध्यायः ॥

### ॥ उपोद्घात ॥

योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन् ।
वर्णाश्रमेतराणा नो ब्रूहि धर्मानशेषत ॥ १ ॥
मिथिलास्थ स योगीन्द्र क्षणं ध्यात्वाब्रवीन्मुनीन् ।
यस्मिन्देशे मृग कृष्णस्तस्मिन्धर्मान्निबोधत ॥ २ ॥
पुराणन्यायमीमासाधर्मशास्त्राङ्गमिश्रिता ।
वेदा स्थानानि विद्याना धर्मस्य च चतुर्दश ॥ ३ ॥
मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरा ।
यमापस्तम्बसवर्ता कात्यायनबृहस्पती ॥ ४ ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजका ॥ ५ ॥
देशे काल उपायेन द्रव्य श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ ६ ॥
श्रुति स्मृति सदाचार स्वस्य च प्रियमात्मन ।
सम्यक्सङ्कल्पज कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥
इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥
चत्वारो वेदधर्मज्ञा पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते य स धर्म स्यादेको वाऽध्यात्मवित्तम ॥ ९ ॥

### ॥ अथ संस्कारा ॥

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजा ।
निषेकादिश्मशानान्तास्तेषा वै मन्त्रत क्रिया ॥ १० ॥

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ।
षष्ठे ऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥ ११ ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठे ऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥ १२ ॥
एवमेनः शमं याति बीजगर्भसमुद्भवम् ।
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ १३ ॥

## ॥ अथोपनयनम् ॥

गर्भाष्टमे ऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ १५ ॥

## ॥ अथ ब्रह्मचारिप्रकरणम् ॥

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ १७ ॥
अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥
कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥
त्रिः प्राश्याऽपो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥
हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः ।
शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।
सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥

गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥
प्राणानायम्य सम्प्रोक्ष्य तृचेनाब्दैवतेन तु ।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ २४ ॥
सन्ध्यां प्राक्प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ।
अग्निकार्यं ततः कुर्यात्सन्ध्ययोरुभयोरपि ॥ २५ ॥
ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ।
गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ २६ ॥
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ।
हितं चास्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥ २७ ॥
कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः ।
अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥ २८ ॥
दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।
ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ २९ ॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥ ३० ॥
कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।
आपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ ३१ ॥
ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३२ ॥
मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥ ३३ ॥
स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥ ३४ ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ।
एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ ३५ ॥
प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥ ३६ ॥

आपोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ ३७ ॥
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ ३८ ॥
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ ३९ ॥
यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ ४० ॥
मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः ।
*पितॄन्मधुघृताभ्यां च ऋचोऽधीते हि योऽन्वहम् ॥ ४१ ॥*
यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ।
प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ॥ ४२ ॥
स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ।
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४३ ॥
मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् ।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ ४४ ॥
वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ।
*इतिहासांस्तथा विद्याः शक्त्याधीते हि योऽन्वहम् ॥ ४५ ॥*
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।
करोति तृप्तिं च तथा पितॄणां मधुसर्पिषा ॥ ४६ ॥
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।
यं यं क्रतुमधीते च तस्य तस्याप्नुयात्फलम् ॥ ४७ ॥
त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ।
तपसश्च परस्येह नित्यं स्वाध्यायवान्द्विजः ॥ ४८ ॥
नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥
अनेन विधिना देहं साधयन्विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ॥ ५० ॥

## ॥ अथ समावर्तनम् ॥

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ ५१ ॥

## ॥ अथ विवाहप्रकरणम् ॥

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥
दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।
स्फीतादपि न सञ्चारिरोगदोषसमन्वितात् ॥ ५४ ॥
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः ॥ ५५ ॥
यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ।
न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥ ५६ ॥
तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः ॥ ५७ ॥
ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥
यज्ञस्थायर्त्विजे दैव आदायार्षस्तु गोद्वयम् ।
चतुर्दश प्रथमजः पुनात्युत्तरजस्तु षट् ॥ ५९ ॥
इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने ।
स कायः पावयेत्तज्जः षट् षड्वंश्यान्सहात्मना ॥ ६० ॥
आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ।
राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात् ॥ ६१ ॥
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ ६२ ॥

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ६३ ॥
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् ॥ ६४ ॥
सकृत्प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ।
दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥ ६५ ॥
अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ।
अदुष्टां च त्यजन्कन्यां दूषयंस्तु मृषा शतम् ॥ ६६ ॥
अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥ ६७ ॥
अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥ ६८ ॥
आगर्भसम्भवाद्गच्छेत्पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ॥ ६९ ॥
हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ ७० ॥
सोमः शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरम् ।
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥ ७१ ॥
व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्तृवधादौ च तथा महति पातके ॥ ७२ ॥
सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ७३ ॥
अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ।
यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते ॥ ७४ ॥
मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्तिमवाप्नोति मोदते चोमया सह ॥ ७५ ॥

---

(१) 'दण्ड्यो' इत्यपि पाठः

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ ७६ ॥
स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः ।
आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः ॥ ७७ ॥
लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।
यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ॥ ७८ ॥
षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥ ७९ ॥
एवं गच्छन्स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥ ८० ॥
यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥ ८१ ॥
भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥ ८२ ॥
संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।
कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥ ८३ ॥
क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ ८४ ॥
रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः ॥ ८५ ॥
पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।
हीना न स्याद्विना भर्त्रा गर्हणीयान्यथा भवेत् ॥ ८६ ॥
पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया ।
सेह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥ ८७ ॥
सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।
सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥ ८८ ॥
दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ ८९ ॥

## ॥ अथ वर्णजातिविवेकप्रकरणम् ॥

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥ ९० ॥
विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा ॥ ९१ ॥
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥ ९२ ॥
ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥ ९३ ॥
क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ ९४ ॥
माहिष्येण करण्यां तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥ ९५ ॥
जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमे ऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥ ९६ ॥

## ॥ अथ गृहस्थप्रकरणम् ॥

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥ ९७ ॥
शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।
प्रातः सन्ध्यामुपासीत दन्तधावनपूर्वकम् ॥ ९८ ॥
हुत्वाग्नीन्सूर्यदैवत्याञ्जपेन्मन्त्रान्समाहितः ।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥ ९९ ॥
उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ।
स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥ १०० ॥
वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ १०१ ॥

बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ।
भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ १०२ ॥
देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत् ।
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् ॥ १०३ ॥
अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।
स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मने ॥ १०४ ॥
बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥ १०५ ॥
आपोशनेनोपरिष्टादधस्तादश्नता तथा ।
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ १०६ ॥
अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः ।
अप्रणोद्यो अतिथिः सायमपि वाग्भूतृणोदकैः ॥ १०७ ॥
सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ।
भोजयेच्चागतान्काले सखिसम्बन्धिबान्धवान् ॥ १०८ ॥
महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रिया न्वासनं स्वादु भोजनं सूनृतं वचः ॥ १०९ ॥
प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः ।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥ ११० ॥
अध्वनीनो अतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ १११ ॥
परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।
वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥ ११२ ॥
अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत् ।
अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः ॥ ११३ ॥
उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्त्याथ संविशेत् ॥ ११४ ॥
ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।
धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत् ॥ ११५ ॥

विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।
एतैः प्रभूतैः शूद्रो ऽपि वार्धके मानमर्हति ॥ ११६ ॥

वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।
पन्था देयो नृपस्तेषां मान्यः स्नातस्तु भूपतेः ॥ ११७ ॥

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहो ऽधिको विप्रे याजनाध्यापने तथा ॥ ११८ ॥

प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ।
कुसीदं कृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम् ॥ ११९ ॥

शूद्रस्य द्विजशुश्रूषा तयाजीवन्वणिग्भवेत् ।
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् ॥ १२० ॥

भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः ।
नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत् ॥ १२१ ॥

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥ १२२ ॥

वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् ।
आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥ १२३ ॥

त्रैवार्षिकाधिकान्नो यः स तु सोमं पिबेद्द्विजः ।
प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् ॥ १२४ ॥

प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्तव्याग्रायणेष्टिश्च चातुर्मास्यानि चैव हि ॥ १२५ ॥

एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः ।
हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥ १२६ ॥

चाण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात् ।
यज्ञार्थं लब्धमददद्भासः काको ऽपि वा भवेत् ॥ १२७ ॥

कुशूलकुम्भीधान्यो वा त्र्याहिको ऽश्वस्तनो ऽपि वा ।
जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥ १२८ ॥

## ॥ अथ स्नातकप्रकरणम् ॥

न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ।
न विरुद्धप्रसङ्गेन सन्तोषी च भवेत्सदा ॥ १२९ ॥
राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
दम्भिहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत् ॥ १३० ॥
शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।
न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ १३१ ॥
न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।
नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषिः ॥ १३२ ॥
दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः ।
कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥
न तु मेहेन्नदीच्छायावर्त्मगोष्ठाम्बुभस्मसु ।
न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनः ॥ १३४ ॥
नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।
न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ १३५ ॥
अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयन् ।
वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च ॥ १३६ ॥
ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ।
पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ १३७ ॥
जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत् ।
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ॥ १३८ ॥
विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ १३९ ॥
नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्क्वचित् ।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥ १४० ॥
प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।
दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम् ॥ १४१ ॥

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥ १४२ ॥
पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ १४३ ॥
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते ॥ १४४ ॥
सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ १४५ ॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥ १४६
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ १४७ ।
श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ १४८ ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसम्प्लवे ।
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते ॥ १४९ ॥
पांशुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ १५० ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥ १५१ ॥
देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनादि च ॥ १५२ ॥
विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन ।
आमृत्योः श्रियमाकाङ्क्षेन्न कंचिन्मर्मणि स्पृशेत् ॥ १५३
दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।
श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत् ॥ १५४ ॥
गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।
न निन्दाताडने कुर्यात्पुत्रं शिष्यं च ताडयेत् ॥ १५५ ॥

कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ॥ १५६ ॥
मातृपितृतिथिभ्रातृजामिसम्बन्धिमातुलैः ।
वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः ॥ १५७ ॥
ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः ।
विवादं वर्जयित्वा तु सर्वांल्लोकाञ्जयेद्गृही ॥ १५८ ॥
पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु ।
स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च ॥ १५९ ॥
परशय्यासनोद्यानगृहयानानि वर्जयेत् ।
अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥ १६० ॥
कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ।
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥ १६१ ॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ १६२ ॥
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।
शस्त्रविक्रयिकर्मारतुन्नवायश्ववृत्तिनाम् ॥ १६३ ॥
नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीविसहोपपतिवेश्मनाम् ॥ १६४ ॥
पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ १६५ ॥
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ १६६ ॥

## ॥ अथ भक्ष्याभक्ष्यप्रकरणम् ॥

अनर्चितं वृथामांसं केशकीटसमन्वितम् ।
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥ १६७ ॥
उदक्यास्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् ।
गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः ॥ १६८ ॥

अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥ १६९ ॥

सन्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत् ।
औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥ १७० ॥

देवतार्थं हविः शिग्रुं लोहितान्व्रश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि कवकानि च ॥ १७१ ॥

क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ।
सारसैकशफान्हंसान्सर्वांश्च ग्रामवासिनः ॥ १७२ ॥

कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ।
वृथाकृसरसंयावपायसापूपशष्कुलीः ॥ १७३ ॥

कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ।
जालपादान्खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥ १७४ ॥

चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥ १७५ ॥

पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।
लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ॥ १७६ ॥

भक्ष्याः पञ्चनखाः सेधा गोधाकच्छपशल्लकाः ।
शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥ १७७ ॥

तथा पाठीनराजीवाः सशल्काश्च द्विजातिभिः ।
अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने ॥ १७८ ॥

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।
देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक् ॥ १७९ ॥

वसेत्स नरके घोरे दिनानि पशुरोमभिः ।
सम्मितानि दुराचारो यो हन्त्यविधिना पशून् ॥ १८० ॥

सर्वान्कामानवाप्नोति हयमेधफलं तथा ।
गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनात् ॥ १८१ ॥

## ॥ अथ द्रव्यशुद्धिप्रकरणम् ॥

सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ।
शाकरज्जुमूलफलवासोविदलचर्मणाम् ॥ १८२ ॥

पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ।
चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥ १८३ ॥

स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम् ।
प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥ १८४ ॥

तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसम्भुवाम् ।
मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥ १८५ ॥

सोष्णैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् ।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥ १८६ ॥

सगौरसर्षपैः क्षौमं पुनःपाकान्महीमयम् ।
कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा ॥ १८७ ॥

भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनात् ॥ १८८ ॥

गोघ्राते ऽन्ने तथा केशमक्षिकाकीटदूषिते ।
सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये ॥ १८९ ॥

त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।
भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु ॥ १९० ॥

अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात् ।
वाक्शस्तमम्बुनिर्णिक्तमज्ञातं च सदा शुचि ॥ १९१ ॥

शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ।
तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितम् ॥ १९२ ॥

रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः ।
विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्रवणे शुचिः ॥ १९३ ॥

अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः ।
पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः ॥ १९४ ॥

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतानि च ।
मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥ १९५ ॥
स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥ १९६ ॥
रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुध्यन्ति पक्वेष्टकाचितानि च ॥ १९७ ॥

॥ अथ दानप्रकरणम् ॥

तपस्तप्त्वासृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥ १९८ ॥
सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥ १९९ ॥
न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥ २०० ॥
गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।
नापात्रे विदुषा किंचिदात्मनः श्रेय इच्छता ॥ २०१ ॥
विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन्स दातारमधो नयत्यात्मानमेव च ॥ २०२ ॥
दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतं च शक्तितः ॥ २०३ ॥
हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ।
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥ २०४ ॥
दाताऽस्याः स्वर्गमाप्नोति वत्सरान्रोमसम्मितान् ।
कपिला चेत्तारयति भूयश्चाऽऽसप्तमं कुलम् ॥ २०५ ॥
सवत्सा रोमतुल्यानि युगान्युभयतोमुखी ।
दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत् ॥ २०६ ॥
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते ।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ २०७ ॥

यथा कथंचिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा ।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ २०८ ॥
श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ २०९ ॥
भूदीपांश्चान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।
नैवेशिकं स्वर्णधुर्यं दत्त्वा स्वर्गे महीयते ॥ २१० ॥
गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।
यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥ २११ ॥
सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २१२ ॥
प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥ २१३ ॥
कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ॥ २१४ ॥
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ २१५ ॥
देवातिथ्यर्चनकृते गुरुभृत्यादिवृत्तये ।
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१६ ॥

॥ अथ श्राद्धप्रकरणम् ॥

अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसङ्क्रमः ॥ २१७ ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥ २१८ ॥
अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ २१९ ॥
स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ।
त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥ २२० ॥

कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदे ॥ २२१ ॥
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥ २२२ ॥

[ विनग्नो विक्षुधिः श्वित्री विद्धप्रजननो ऽगदः ।
वाग्दुष्टः पालदमकौ वणिगायुधजीवकौ ॥ १ ॥ ]

भृतकाऽध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ।
मित्रध्रुक्पिशुनः सोमविक्रयी परिविन्दकः ॥ २२३ ॥
मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः ।
परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥ २२४ ॥
निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवाञ्शुचिः ।
तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥ २२५ ॥
अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ।
पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ २२६ ॥
युग्मान्दैवे यथाशक्ति पित्र्ये ऽयुग्मांस्तथैव च ।
परिस्तृते शुचौ देशे दक्षिणाप्रवणे तथा ॥ २२७ ॥
द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ २२८ ॥
पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ।
आवाहयेदनुज्ञातो विश्वे देवास इत्यृचा ॥ २२९ ॥
यवैरन्ववकीर्याथ भाजने सपवित्रके ।
शंनोदेव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥ २३० ॥
या दिव्या इति मन्त्रेण हस्तेष्वर्घं विनिक्षिपेत् ।
दत्त्वोदकं गन्धमाल्यधूपदानं सदीपकम् ॥ २३१ ॥
तथाच्छादनदानं च करशौचार्थमम्बु च ।
अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् २३२ ॥

(१) अयं क्षेपकः

द्विगुणांस्तु कुशान्दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ॥ २३३ ॥
यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत् ।
दत्त्वार्घं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥ २३४ ॥
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ।
अग्नौकरिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ॥ २३५ ॥
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ।
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥ २३६ ॥
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः ।
दत्त्वान्नं पृथिवी पात्रमिति पात्राभिमन्त्रणम् ॥ २३७ ॥
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ।
सव्याहृतिकां गायत्रीं मधु वाता इति तृचम् ॥ २३८ ॥
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्ते अपि वाग्यताः ।
अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ॥ २३९ ॥
आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ।
अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च ॥ २४० ॥
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ।
सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ॥ २४१ ॥
उच्छिष्टसन्निधौ पिण्डान्दद्याद्वै पितृयज्ञवत् ।
[ द्विहायनस्य वत्सस्य यन्मात्रं तु विशेन्मुखम् ।
पिण्डान्कुर्यात्तु तन्मात्रान्भूमौ दद्यात्पृथक्पृथक् ॥ २ ॥ ]
मातामहानामप्येवं दद्यादाचमनं ततः ॥ २४२ ॥
स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ॥
दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥ २४३ ॥
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ॥ २४४ ॥

---

(१) [illegible]

विश्वे देवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ।
दातारो नो ऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥ २४५ ॥
श्रद्धा च नो मा व्यगमद्बहु देयं च नो ऽस्त्विति ।
इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य विसर्जयेत् ॥२४६॥
वाजे वाज इति प्रीतः पितृपूर्वं विसर्जयेत् ।
यस्मिंस्ते संस्रवाः पूर्वमर्घपात्रे निवेशिताः ॥ २४७ ॥
पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ।
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ॥ २४८ ॥
ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह ।
एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान्पितॄन् ॥ २४९ ॥
यजेत दधिकर्कन्धुमिश्रान्पिण्डान्यवैः क्रियाः ।
एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकम् ॥ २५० ॥
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ।
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने ॥ २५१ ॥
अभिरम्यतामिति वदेद्ब्रूयुस्ते ऽभिरताः स्म ह ।
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ॥ २५२ ॥
अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥ २५३ ॥
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ।
अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत् ॥ २५४ ॥
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ।
मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ॥ २५५ ॥
प्रतिसंवत्सरं चैवमाद्यमेकादशे ऽहनि ।
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥ २५६ ॥
प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ।
हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ॥ २५७ ॥
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ।
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ॥ २५८ ॥

मांसवृद्ध्या हि तृप्यन्ति दत्तैरिह पितामहाः ।
खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ॥ २५९ ॥
लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च ।
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ॥ २६० ॥
तथा वर्षात्रयोदश्यां मघासु च विशेषतः ।
कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि ॥ २६१ ॥
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ।
ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ॥ २६२ ॥
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ।
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ॥ २६३ ॥
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ।
स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ॥ २६४ ॥
पुत्राञ्छ्रैष्ठ्यं ससौभाग्यं समृद्धिं मुख्यतां शुभम् ।
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि ॥ २६५ ॥
अरोगित्वं यशो वीतशोकतां परमां गतिम् ।
धनं वेदान्भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ॥ २६६ ॥
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ।
कृत्तिकादि भरण्यन्तं स कामानाप्नुयादिमान् ॥ २६७ ॥
आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ।
वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ॥ २६८ ॥
प्रीणयन्ति मनुष्याणां पितॄञ्छ्राद्धेन तर्पिताः ।
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥ २६९ ॥
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ।

॥ अथ गणपतिकल्पः ॥

विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः ॥ २७० ॥
गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ।
तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ॥ २७१ ॥

स्वप्ने ऽवगाहते ऽत्यर्थं जलं मुण्डांश्च पश्यति ।
कषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥ २७२ ॥
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ।
व्रजन्नपि तथात्मानं मन्यते ऽनुगतं परैः ॥ २७३ ॥
विमना विफलारम्भः संसीदत्यनिमित्ततः ।
तेनोपसृष्टो लभते न राज्यं राजनन्दनः ॥ २७४ ॥
कुमारी न च भर्तारमपत्यं गर्भमङ्गना ।
आचार्यत्वं श्रोत्रियश्च न शिष्यो ऽध्ययनं तथा ॥ १७५ ॥
वणिग्लाभं न चाप्नोति कृषिं चापि कृषीवलः ।
स्नपनं तस्य कर्तव्यं पुण्ये ऽह्नि विधिपूर्वकम् ॥ २७६ ॥
गौरसर्षपकल्केन साज्येनोत्सादितस्य च ।
सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ॥ २७७ ॥
भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजाः शुभाः ।
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ॥ २७८ ॥
मृत्तिकां रोचनां गन्धान्गुग्गुलुं चाप्सु निक्षिपेत् ।
या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥ २७९ ॥
चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः ।
सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ॥ २८० ॥
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ।
भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ॥ २८१ ॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ।
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ॥ २८२ ॥
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा ।
स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ॥ २८३ ॥
जुहुयान्मूर्धनि कुशान्सव्येन परिगृह्य तु ।
मितश्च सम्मितश्चैव तथा शालकटङ्कटौ ॥ २८४ ॥
कूष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ।
नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ॥ २८५ ॥

चर्याचतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ।
कृताकृतांस्तण्डुलांश्च पललौदनमेव च ॥ २८६ ॥
मत्स्यान्पक्कांस्तथैवामान्मांसमेतावदेव तु ।
पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ॥ २८७ ॥
मूलकं पूरिकापूपांस्तथैवोण्डेरकस्रजः ।
दध्यन्नं पायसं चैव गुडपिष्टं समोदकम् ॥ २८८ ॥
एतान्सर्वानुपाहृत्य भूमौ कृत्वा ततः शिरः ।
विनायकस्य जननीमुपतिष्ठेत्ततो ऽम्बिकाम् ॥ २८९ ॥
दूर्वासर्षपपुष्पाणां दत्त्वार्घं पूर्णमञ्जलिम् ।
रूपं देहि यशो देहि भगं भवति देहि मे ॥ २९० ॥
पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ।
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ २९१ ॥
ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ।
एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ॥ २९२ ॥
कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् ।
आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ॥ २९३ ॥
महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ।

॥ अथ ग्रहशान्तिप्रकरणम् ॥

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ॥ २९४ ॥
वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्नपि ।
सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ॥ २९५ ॥
शुक्रः शनैश्चरो राहुः केतुश्चेते ग्रहाः स्मृताः ।
ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ॥ २९६ ॥
रजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ।
स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा ॥ २९७ ॥
यथावर्णं प्रदेयानि वासांसि कुसुमानि च ।
गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः ॥ २९८ ॥

कर्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् ।
आ कृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत् ॥ २९९ ॥
उद्बुध्यस्वेति च ऋचो यथासङ्ख्यं प्रकीर्तिताः ।
बृहस्पते अति यदर्यस्तथैवान्नात्परिस्रुतः ॥ ३०० ॥
शं नो देवीस्तथा काण्डात्केतुं कृण्वन्निमास्तथा ।
अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः ॥ ३०१ ॥
उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ।
एकैकस्य त्वष्टशतमष्टाविंशतिरेव वा ॥ ३०२ ॥
होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः ।
गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ॥ ३०३ ॥
दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ।
दद्याद्ग्रहक्रमादेतद्द्विजेभ्यो भोजनं बुधः ॥ ३०४ ॥
शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ।
धेनुः शङ्खस्तथानड्वान्हेम वासो हयः क्रमात् ॥ ३०५ ॥
कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ।
यस्य यश्च ग्रहो दुष्टः स तं यत्नेन पूजयेत् ॥ ३०६ ॥
ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ।
ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ॥ ३०७ ॥
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ।

## ॥ अथ राजधर्मप्रकरणम् ॥

महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ॥ ३०८ ॥
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ।
अदीर्घसूत्रः स्मृतिमानक्षुद्रो ऽपरुषस्तथा ॥ ३०९ ॥
धार्मिको ऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ।
स्वरन्ध्रगोप्तान्वीक्षिक्यां[1] दण्डनीत्यां तथैव च ॥ ३१० ॥

---

१ आन्वीक्षिक्या तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥ इति मनुरित्युपक्रम्य किरातार्जुनीयस्य द्वितीयसर्गे षष्ठश्लोकटीकायां मल्लिनाथेनोक्तम् ।

विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ।
समन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान्स्थिराञ्छुचीन् ॥ ३११ ॥
तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ।
पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम् ॥ ३१२ ॥
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ।
श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विजः ॥ ३१३ ॥
यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ।
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ॥ ३१४ ॥
अक्षयो ऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ।
अस्कन्नमव्ययं चैव प्रायश्चित्तैरदूषितम् ॥ ३१५ ॥
अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ।
अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत् ॥ ३१६ ॥
पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ।
दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ॥ ३१७ ॥
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ।
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ॥ ३१८ ॥
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ।
प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ॥ ३१९ ॥
स्वहस्तकालसम्पन्नं शासनं कारयेत्स्थिरम् ।
रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ॥ ३२० ॥
तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ।
तत्र तत्र च निष्णातानध्यक्षान्कुशलाञ्छुचीन् ॥ ३२१ ॥
प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ।
नातः परतरो धर्मो नृपाणां यद्रणार्जितम् ॥ ३२२ ॥
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ।
य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः ॥ ३२३ ॥

१ [illegible]

अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ।
पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनाम् ॥ ३२४ ॥
राजा सुकृतमादत्ते हतानां विपलायिनाम् ।
तवाहंवादिनं क्लीबं निर्हेतिं परसङ्गतम् ॥ ३२५ ॥
न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम् ।
कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ॥ ३२६ ॥
व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ।
हिरण्यं व्यापृतानीतं भाण्डागारेषु निक्षिपेत् ॥ ३२७ ॥
पश्येच्चारांस्ततो दूतान्प्रेषयेन्मन्त्रिसङ्गतः ।
ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ॥ ३२८ ॥
बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ।
सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ॥ ३२९ ॥
गीतनृत्यैश्च भुञ्जीत पठेत्स्वाध्यायमेव च ।
संविशेत्तूर्यघोषेण प्रतिबुध्येत्तथैव च ॥ ३३० ॥
शास्त्राणि चिन्तयेद्बुद्ध्या सर्वकर्तव्यतास्तथा ।
प्रेषयेच्च ततश्चारान्स्वेष्वन्येषु च सादरान् ॥३३१ ॥
ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ।
दृष्ट्वा ज्योतिर्विदो वैद्यान्दद्याद्गां काञ्चनं महीम् ॥ ३३२ ॥
नैवेशिकानि च तथा श्रोत्रियेभ्यो गृहाणि च ।
ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनो ऽरिषु ॥ ३३३ ॥
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ।
पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन् ॥ ३३४ ॥
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ।
चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ॥ ३३५ ॥
पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ।
अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ॥ ३३६ ॥
तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ।
ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ॥ ३३७ ॥

साधून्संमानयेद्राजा विपरीतांश्च घातयेत् ।
उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ॥ ३३८ ॥
सदानमानसत्काराञ्श्रोत्रियान्वासयेत्सदा ।
अन्यायेन नृपो राष्ट्रात्स्वकोशं यो ऽभिवर्धयेत् ॥ ३३९ ॥
सो ऽचिराद्विगतश्रीको नाशमेति सबान्धवः ।
प्रजापीडनसन्तापात्समुद्भूतो हुताशनः ॥ ३४० ॥
राज्ञः श्रियं कुलं प्राणांश्चादग्ध्वा विनिवर्तते ।
य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ॥ ३४१ ॥
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ।
यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः ॥ ३४२ ॥
तथैव परिपाल्यो ऽसौ यदा वशमुपागतः ।
मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ॥ ३४३ ॥
कुर्याद्यथास्य न विदुः कर्मणामाफलोदयात् ।
अरिर्मित्रमुदासीनो ऽनन्तरस्तत्परः परः ॥ ३४४ ॥
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ।
उपायाः साम दानं च भेदो दण्डस्तथैव च ॥ ३४५ ॥
सम्यक्प्रयुक्ताः सिध्येयुर्दण्डस्त्वगतिका गतिः ।
सन्धिं च विग्रहं यानमासनं संश्रयं तथा ॥ ३४६ ॥
द्वैधीभावं गुणानेतान्यथावत्परिकल्पयेत् ।
यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ॥ ३४७ ॥
परश्च हीन आत्मा च हृष्टवाहनपूरुषः ।
दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ॥ ३४८ ॥
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम् ।
केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः ॥ ३४९ ॥
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ।
यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ॥ ३५० ॥
एवं पुरुषकारेण विना दैवं न सिध्यति ।
हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ॥ ३५१ ॥

अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितः ।
स्वाम्यमात्यो जनो दुर्गं कोषो दण्डस्तथैव च ॥ ३५२ ॥

मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ।
तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ॥ ३५३ ॥

धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ।
स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना ॥ ३५४ ॥

सत्यसंधेन शुचिना सुसहायेन धीमता ।
यथाशास्त्रं प्रयुक्तः सन्सदेवासुरमानवम् ॥ ३५५ ॥

जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ।
अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ॥ ३५६ ॥

सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ।
अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ॥ ३५७ ॥

नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ।
यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ॥ ३५८ ॥

इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः ।
इति सञ्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ॥ ३५९ ॥

व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ।
कुलानि जातीः श्रेणीश्च गणाञ्जानपदानपि ॥ ३६० ॥

स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि ।
जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ॥ ३६१ ॥

तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ।
गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ॥ ३६२

कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ।
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् ॥ ३६३ ॥

द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ।
शतमानं तु दशभिर्धरणैः पलमेव च ॥ ३६४ ॥

निष्कः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ।
साशीतिः पणसाहस्रो दण्ड उत्तमसाहसः ॥ ३६५ ॥
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ।
धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ॥ ३६६ ॥
योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे ।
ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा ॥ ३६७ ॥
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ।

॥ इति याज्ञवल्कीये धर्मशास्त्रे

आचाराख्यः

प्रथमोऽध्यायः ॥

## ॥ अथ व्यवहाराध्यायः ॥

१

### ॥ अथ व्यवहारपरिभाषा ॥

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ १ ॥
श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ २ ॥
अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ ३ ॥
रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक्पृथग्दण्ड्या विवादाद्द्विगुणं दमम् ॥ ४ ॥
स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ५ ॥
प्रत्यर्थिनो ऽग्रतो लेख्यं यथावेदितमर्थिना ।
समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ ६ ॥
श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।
ततो ऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥ ७ ॥
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतो ऽन्यथा ।
चतुष्पाद्व्यवहारो ऽयं विवादेषूपदर्शितः ॥ ८ ॥

### ॥ अथ साधारणमातृकाः ॥

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥ ९ ॥
कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ।
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥ १० ॥

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥ ११ ॥
साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालो ऽन्यत्रेच्छया स्मृतः ॥ १२ ॥
देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ १३ ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ १४ ॥
स्वभावाद्विकृतिं याति मनोवाक्कायकर्मभिः ।
अभियोगे ऽथ साक्ष्ये ऽवा दुष्टः स परिकीर्तितः ॥ १५ ॥
सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् ।
न चाहूतो वदेत्किंचिद्धीनो दण्ड्यश्च स स्मृतः ॥ १६ ॥
साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षे ऽधरीभूते भवन्त्युत्तरवादिनः ॥ १७ ॥
सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥ १८ ॥
छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १९ ॥
निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ २० ॥
स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ २१ ॥
प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ २२ ॥
सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ २३ ॥
पश्यतो ऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ २४ ॥

आधिसीमोपनिक्षेपजडबालधनैर्विना ।
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ २५ ॥
आध्यादीनां विहर्तारं धनिने दापयेद्धनम् ।
दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ २६ ॥
आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।
आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ॥ २७ ॥
आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ २८ ॥
योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विनाकृता ॥ २९ ॥
नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ३० ॥
बलोपधिविनिर्वृत्तान्व्यवहारान्निवर्तयेत् ।
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥ ३१ ॥
मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ॥ ३२ ॥
प्रनष्टाधिगतं देयं नृपेण धनिने धनम् ।
विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ ३३ ॥
राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः ।
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ॥ ३४ ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च ॥ ३५ ॥
देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु ।
अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ॥ ३६ ॥

॥ अथ ऋणादानप्रकरणम् ॥

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥ ३७ ॥

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ३८ ॥

सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा ।
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा तथा ॥ ३९ ॥

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छन्दण्ड्यो दाप्यश्च तद्धनम् ॥ ४० ॥

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥ ४१ ॥

राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥ ४२ ॥

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ४३ ॥

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्धते न ततः परम् ॥ ४४ ॥

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तदृक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ ४५ ॥

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ४६ ॥

सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् ।
वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ४७ ॥

गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥ ४८ ॥

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥ ४९ ॥

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रैरृणं देयं निह्नवे साक्षिभावितम् ॥ ५० ॥

रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥ ५१ ॥

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥ ५२ ॥
दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ।
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ ५३ ॥
दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥ ५४ ॥
बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ ५५ ॥
प्रतिभूर्दापितो यत्तु प्रकाशं धनिनां धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥ ५६ ॥
सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥ ५७ ॥
आधिः प्रणश्येद्विगुणे धने यदि न मोच्यते ।
काले कालकृतो नश्येत्फलभोग्यो न नश्यति ॥ ५८ ॥
गोप्याधिभोगे नो वृद्धिः सोपकारे ऽथ हापिते ।
नष्टो देयो विनष्टश्च दैवराजकृतादृते ॥ ५९ ॥
आधेः स्वीकरणात्सिद्धी रक्ष्यमाणो ऽप्यसारताम् ।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥ ६० ॥
चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ६१ ॥
उपस्थितस्य मोक्तव्य आधिः स्तेनो ऽन्यथा भवेत् ।
प्रयोजके ऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥ ६२ ॥
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।
विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ॥ ६३ ॥
यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ ६४ ॥

## ॥ अथ निक्षेपप्रकरणम् ॥

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ ६५ ॥
न दाप्योऽपहृतं तत्तु राजदैविकतस्करैः ।
भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ॥ ६६ ॥
आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ।
याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ॥ ६७

## ॥ अथ साक्षिप्रकरणम् ॥

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ ६८ ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ ६९ ॥
स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ॥ ७० ॥
पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः ।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥ ७१ ॥
उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।
सर्वः साक्षी संग्रहणे चौर्ये पारुष्यसाहसे ॥ ७२ ॥
साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ।
ये पातककृतां लोका महापातकिनां तथा ॥ ७३ ॥
अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।
स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ७४ ॥
सुकृतं यत्त्वया किंचिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ ७५ ॥
अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः स्यात्षट्चत्वारिंशकेऽहनि ॥ ७६ ॥

न ददाति च यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥ ७७ ॥
द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥ ७८ ॥
यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥ ७९ ॥
उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥ ८०
पृथक्पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ ८१ ।
यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ ८२ ॥
वर्णिनां तु वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ ८३ ॥

## ॥ अथ लेख्यप्रकरणम् ॥

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।
लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम् ॥ ८४ ॥
समामासतदर्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ ८५ ॥
समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ ८६ ॥
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥ ८७ ॥
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥ ८८ ॥
विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृताद्दृते ॥ ८९ ॥

ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ।
आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥ ९० ॥
देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत् ॥ ९१ ॥
सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥ ९२ ॥
लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम् ।
धनी चोपगतं दद्यात्स्वहस्तपरिचिह्नितम् ॥ ९३ ॥
दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत् ।
साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ॥ ९४ ॥

॥ अथ दिव्यप्रकरणम् ॥

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ ९५ ॥
रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः ।
विनापि शीर्षकात्कुर्यान्नृपद्रोहेऽथ पातके ॥ ९६ ॥
सचैलं स्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ ९७ ॥
तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ ९८ ॥
नासहस्राद्धरेत्फालं न विषं न तुलां तथा ।
नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥ ९९ ॥
तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥ १०० ॥
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥ १०१ ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ १०२ ॥

करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ १०३ ॥
त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥ १०४ ॥
तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम् ।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥ १०५ ॥
स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ।
षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ॥ १०६ ॥
मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।
अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ॥ १०७ ॥
सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥ १०८ ॥
समकालमिषुं मुक्तमानीयान्यो जवी नरः ।
गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥ १०९ ॥
त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात्सत्येन भव मे ऽमृतम् ॥ ११० ।
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।
यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ॥ १११ ॥
देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥ ११२ ॥
अर्वाक्चतुर्दशादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ ११३ ॥

॥ अथ दायविभागप्रकरणम् ॥

विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥ ११४ ॥
यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥ ११५ ॥

शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रिया ।
न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः ॥ ११६ ॥
विभजेरन्सुताः पित्रोरूर्ध्वमृक्थमृणं समम् ।
मातुर्दुहितरः शेषमृणात्ताभ्य ऋते ऽन्वयः ॥ ११७ ॥
पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥ ११८ ॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ ११९ ॥
सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।
अनेकपितृकाणां तु पितृतो भागकल्पना ॥ १२० ॥
भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि ॥ १२१ ॥
विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ १२२ ॥
पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।
पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् ॥ १२३ ॥
असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम् ॥ १२४ ॥
चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥ १२५ ॥
अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ १२६ ॥
अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसावृक्थी पिण्डदाता च धर्मतः ॥ १२७ ॥
औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १२८ ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १२

अक्षतायां क्षतायां वा जातः पौनर्भवस्तथा ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ १३० ॥
क्रीतस्तु ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयङ्कृतः ।
दत्तात्मा तु स्वयन्दत्तो गर्भे विन्नः सहोढजः ॥ १३१ ॥
उत्सृष्टो गृह्यते यस्तु सो ऽपविद्धो भवेत्सुतः ।
पिण्डदों ऽशहरश्चैषां पूर्वाभावे परः परः ॥ १३२ ॥
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।
जातो ऽपि दास्यां शूद्रेण कामतों ऽशहरो भवेत् ॥ १३३ ॥
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम् ।
अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ॥ १३४ ॥
पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥ १३५ ॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥ १३६ ॥
वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥ १३७ ॥
संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्यादपहरेच्चांशं जातस्य च मृतस्य च ॥ १३८ ॥
अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् ।
असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः ॥ १३९ ॥
क्लीबो ऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धो ऽचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः ॥ १४०
औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ।
सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ॥ १४१ ॥
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ १४२ ॥
पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥ १४३ ॥

बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च ।
अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः ॥ १४४ ॥

अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि ।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥ १४५ ॥

दत्त्वा कन्यां हरन्दण्ड्यो व्ययं दद्याच्च सोदयम् ।
मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् ॥ १४६ ॥

दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके ।
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति ॥ १४७ ॥

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम् ॥ १४८ ॥

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥ १४९ ॥

॥ अथ सीमाविवादप्रकरणम् ॥

सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः ।
गोपाः सीमाकृषाणा ये सर्वे च वनगोचराः ॥ १५० ॥

नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः ।
सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम् ॥ १५१ ॥

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥ १५२ ॥

अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ।
अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता ॥ १५३ ॥

आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥ १५४ ॥

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥ १५५ ॥

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरन्कूपः स्वल्पक्षेत्रो बहूदकः ॥ १५६ ॥

स्वामिने यो ऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥ १५७ ॥
फालाहतमपि क्षेत्रं यो न कुर्यान्न कारयेत् ।
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् ॥ १५८ ॥

॥ अथ स्वामिपालविवादप्रकरणम् ॥

माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥ १५९ ॥
भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः ।
सममेषां विवीते ऽपि खरोष्ट्रं महिषीसमम् ॥ १६० ।
यावत्सस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणः[1] फलम् ।
गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति ॥ १६१ ॥
पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ।
अकामतः कामचारे चौरवद्दण्डमर्हति ॥ १६२ ॥
महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।
पालो येषां न ते मोच्या दैवराजपरिप्लुताः ॥ १६३ ॥
यथार्पितान्पशून्गोपः सायं प्रत्यर्पयेत्तथा ।
प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥ १६४ ॥
पालदोषविनाशे च पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः स्वामिनो द्रव्यमेव च ॥ १६५ ॥
ग्राम्येच्छया गोप्रचारो भूमिराजवशेन वा ।
द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत् ॥ १६६ ॥
धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ।
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥ १६७ ॥

॥ अथास्वामिविक्रयप्रकरणम् ॥

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषो ऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥ १६८ ॥

---

(१) 'प्यो ऽयं' इत्यपि क्वचित्पाठः (क)

नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥ १६९ ॥
विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥ १७० ॥
आगमेनोपभोगेन नष्टं भाव्यमतो ऽन्यथा ।
पञ्चबन्धो दमस्तत्र राज्ञे तेनाविभाविते ॥ १७१ ॥
हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥ १७२ ॥
शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥ १७३ ॥
पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ १७४ ॥

॥ अथ दत्ताप्रदानिकप्रकरणम् ॥

स्वं कुटुम्बाविरोधेन देयं दारसुतादृते ।
नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥ १७५ ॥
प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः ।
देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः ॥ १७६ ॥

॥ अथ क्रीतानुशयप्रकरणम् ॥

दशैकपञ्चसप्ताहमासत्र्यहार्धमासिकम् ।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥ १७७ ॥
अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते ।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि ॥ १७८ ॥
शते दशपला वृद्धिरौर्णे कार्पाससौत्रिके ।
मध्ये पञ्चपला सूत्रे सूक्ष्मे तु त्रिपला मता ॥ १७९ ॥
कार्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः ।
न क्षयो न च वृद्धिश्च कौशेये वल्कलेषु च ॥ १८० ॥

देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम् ।
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् ॥ १८१ ॥

॥ अथाभ्युपेत्याशुश्रूषाप्रकरणम् ॥

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ।
स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि ॥ १८२ ॥
प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः ।
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥ १८३ ॥
कृतशिल्पो ऽपि निवसेत्कृतकालं गुरोर्गृहे ।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥ १८४ ॥

॥ अथ संविद्व्यतिक्रमप्रकरणम् ॥

राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु ।
त्रैविद्यं वृत्तिमद्ब्रूयात्स्वधर्मः पाल्यतामिति ॥ १८५ ॥
निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ १८६ ॥
गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥ १८७ ॥
कर्तव्यं वचनं सर्वैः समूहहितवादिनाम् ।
यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥ १८८ ॥
समूहकार्य आयातान्कृतकार्यान्विसर्जयेत् ।
सदानमानसत्कारैः पूजयित्वा महीपतिः ॥ १८९ ॥
समूहकार्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् ॥ १९० ॥
धर्मज्ञाः शुचयो ऽलुब्धा भवेयुः कार्यचिन्तकाः ।
कर्तव्यं वचनं तेषां समूहहितवादिनाम् ॥ १९१ ॥
श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत् ॥ १९२ ॥

## ॥ अथ वेतनादानप्रकरणम् ॥

गृहीतवेतनः कर्म त्यजन्द्विगुणमावहेत् ।
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः ॥ १९३ ॥
दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥ १९४ ॥
देशं कालं च यो ऽतीयाल्लाभं कुर्याच्च यो ऽन्यथा ।
तत्र स्यात्स्वामिनश्छन्दो ऽधिकं देयं कृते ऽधिके ॥ १९५ ॥
यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतम् ॥ १९६ ॥
अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः ।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥ १९७ ॥
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजको ऽपि च ॥ १९८ ॥
ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥ १९९ ॥

## ॥ अथ द्यूतसमाह्वयप्रकरणम् ॥

स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी ॥ २०० ॥
प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले ।
जितं ससभिके स्थाने दापयेदन्यथा न तु ॥ २०१ ॥
द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि ।
राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः ॥ २०२ ॥
द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥ २०३ ॥

## ॥ अथ वाक्पारुष्यप्रकरणम् ॥

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदश ॥ २०४ ॥

अभिगन्तास्मि भगिनीं मातरं वा तवेति ह ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥ २०५ ॥
अर्धो ऽधमेषु द्विगुणः परस्त्रीपूत्तमेषु च ।
दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ॥ २०६ ॥
प्रातिलोम्यापवादेषु द्विगुणात्रिगुणा दमाः ।
वर्णानामानुलोम्येन तस्मादर्धार्धहानितः ॥ २०७ ॥
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।
शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ॥ २०८ ॥
अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश ।
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥ २०९ ॥
पतनीयकृते क्षेपे दण्डो मध्यमसाहसः ।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥ २१० ॥
त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥ २११ ॥

॥ अथ दण्डपारुष्यप्रकरणम् ॥

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च ।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात् ॥ २१२ ॥
भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः ॥ २१३ ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥ २१४ ॥
विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्धिकः ॥ २१५ ॥
उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसम् ॥ २१६ ॥
पादकेशांशुककरोल्लुञ्चनेषु पणान्दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥ २१७ ॥

